इच्छा आदि त्रय की मूर्तित्रय के रूप में उपपत्ति होने के कारण महतत्त्व आदि के स्वरूप का निरूपण किया जाता है। सृष्टि-स्थिति-लय का कारण इच्छादि मूर्तित्रय हैं। अतः भेदात्मक अथवा मिश्र-संसार की सृष्टि इच्छा तत्त्व में, स्थिति ज्ञान तत्त्व में, तथा संहार क्रिया तत्त्व में होता है। सृष्टि-स्थिति-लय का हेतु होने से इच्छा-ज्ञान-क्रिया का स्वभाव त्रिगुणात्मक है। अर्थात् इच्छा-ज्ञान-क्रिया प्रकृति से सत्त्व, रज, तमात्मक हैं।

## विंशतिं सूत्रम्

एततत्रयात्मकतया सकलं त्रिरूपं
सुप्त्यादिका अपि दशाश्च तथैवतिस्रः।
सुप्तिः क्रिया जडतया भवति प्रबन्धो
ज्ञानं विमिश्रमनयो पदमन्यदिच्छा।।२०।।

### व्याख्या

**अथ अत्रेच्छादिरूपतयैव संसारे सर्वमपि वस्तु त्रैरूप्येणावतिष्ठत इत्याह एततत्रयात्मकतयेत्यादि। लोकत्रयं वर्णत्रयं वेदत्रयमित्यादि रूपेण सकलमपि वस्तु जातं पर्यालोच्यमानं त्रैरूष्येणैवावतिष्ठते। तत्रेच्छादि त्रयात्मकत्वमेव हेतुरित्यर्थः। इदानीं प्रकृतास्त्रिस्त्रः सुप्त्यादिदशा अपि इच्छाद्यात्मिकाः एवेत्याह। सुप्त्यादिका इति। सुप्त्यादि दशा अपि तथैवेच्छाद्यात्मिका इति सूत्रकारस्य सामान्योक्त-तात्पर्यभूतमुत्तरत्र-तद्व्यवहार दर्शनात्पारम्पर्येण गुरुमुखा-गतत्वाच्वादिकृतं रहस्यप्रमेयमुपदिश्यते। सुप्त्यादीनामिच्छाद्यात्मकत्वेनान्योन्यमूलतायां तुल्यप्राधान्यतयात्रिकोण-भावप्राप्तावन्योन्यमादि-मध्यान्तभावः सम्भाव्येत तथा च सत्यादि मध्यान्त व्यवस्थितं इच्छा ज्ञान क्रिया भावः प्रत्येकमपि सम्भाव्यते। तथा हि भेद संसारे सुषुप्तिरिच्छा भेदाकारविश्रान्तिरूपत्वात् भेद संसार प्रारम्भपदत्वाच्च प्रारम्भ पदभिच्छादि प्रहतो मार्ग। स्वप्नो ज्ञानं किञ्चित्संकोचपदत्वात्। प्रारम्भपदमिच्छेति प्रारब्धस्य किञ्चित् सिद्धिपदं ज्ञानदशेति, स्फुटतरपदा जाग्रत्क्रिया संकोचस्य पर्यसिसतत्वात् प्रारब्धस्व निर्वर्ण क्रियेति ऋजुमार्गः। एवमिच्छति जानाति करोतीति पदत्रयव्यवस्थिता सर्वोप्युद्यम इति वेदितव्यम्। अथ पुनर्विश्रमण क्रिया समुद्यमे जाग्रदिच्छा कस्यचिदुद्यमस्य निष्पत्तावन्यस्य चोद्यमस्य प्रवृत्तौ मध्ये विश्रान्तिः सम्भवतीति जाग्रत् विरताविच्छा**

लक्षणं विश्रान्ति पदं सम्भवत्येवमन्यत्रापि विज्ञेयम्। निवृत्तिः स्वप्नो ज्ञानं किञ्चिद्विश्रान्ति समुन्मीलनात् सुषुप्तिः क्रिया विश्रमरूपा क्रियाया अनुसंधानात्। तथेह सुप्तिजाग्रतो प्रत्येकमिच्छात्वं क्रियात्वं च स्वप्नस्य ज्ञानञ्च निरूपितम्। अथान्यत्पदं निरूप्यते। विकल्पाविकल्प रूपत्वात् जडविश्रमरूप स्वप्नः प्रकाशपदं, जड विश्रम रूपः सुषुप्तिर्विमर्शपदं, अनयोरन्योन्य भाव परिग्रहप्रक्रियायां स्वप्न इच्छा जडीभाव क्रिया प्रारम्भरूपत्वात्। जाग्रज्ज्ञानं जाग्रति प्रकाशस्य स्ववहिर्भूततयावभासभाने वेद्यांशे जडता परिग्रहात्, जड सुषुप्तिः क्रियासमभिलषिताया जडीभावक्रियायाः साकल्येनानुसंधानात्। अथास्य जड स्वरूपस्य पुनः प्रकाश-प्रकाश करस्याथाऽजडी जडीभावक्रियासमुद्यम एव सुषुप्तिरिच्छा अजडीभाव क्रिया प्रारम्भ रूपत्वात्। जाग्रज्ज्ञानं वेदकप्रकाशस्पृष्ट्या वेद्यस्यकिञ्चिद-जडीभावसमुदयात् स्वप्नः क्रिया किञ्चज्जजडाजड रूपस्य साकल्येन अजडीभावक्रियानुसंधानात्। एवं स्वप्नसुप्त्योः प्रत्येकमिच्छात्वं क्रियात्वंच जाग्रतो ज्ञानत्वञ्च विज्ञेयम्। अनयैव दिशा जडाजड प्रमातृपदयोर्जाग्रत्स्वप्नयोरन्योन्य भावप्रक्रियायामपि वक्ष्यमाण मर्यादया बिन्दु-विसर्ग-श्लेष-रूपत्वेन जडाजड विश्रान्ति रूप सुषुप्ति मध्य कक्ष्यावगाहेन प्रत्येकमिच्छात्वञ्च योजनीयम्। विश्रान्तिरूपाया अपि सुषुप्तेश्चिदचिन्मयत्वात् ज्ञानत्वोक्तिरनवद्यैव। जीवः सुषुप्त्यवगाहेन विश्रान्तिं जानन्नेव शिवो भवति। शिवश्च तदवगाहेन जडत्वं जानन् जीवो भवतीति सुषुप्तेः मध्यपदत्वमुपपन्नमेवेति निर्वद्यकरं प्रमेयम्। एवं सुप्त्यादि पदत्रये यस्य कस्यचिदप्युपक्रमेण विलोमानुलोम भावात् पदत्रय प्रवाह शिवशक्त्यन्योन्य-भाव-समाधिरपि सिध्यतीति। सुषुप्त्यादि दशात्रयावबोधके मातृकाखण्डत्रये यस्यकस्यचिद-प्युपक्रमेणावर्तनम् साम्प्रदयिकमेवेति तत्सर्व-प्रक्रयानुसंधानं परिशीलनीयम्। तदुक्तं मातृका संग्रह रूपस्य बालायन्त्रस्य प्रस्तावे लघुस्तोत्रकारेण क्रमगतं यद्व्यस्थितं व्युत्क्रमादिति। सुप्त्यादिदशात्रय प्रतिबिम्बभूत चतुर्दशारादि चक्रस्कन्धत्रयात्मनः श्रीचक्रस्यापि सपर्या विषये यस्यकस्यचिदपि स्कन्धस्योपक्रेण बीजत्रयोद्देशेन विलोमानुलोप स्कन्धत्रय प्रवाहे सम्यगनुभवसमाधि सिद्धि रेवेति। तदखिल-प्रकृयानुसंधानमाचार्यवर्याणामिति महामन्त्रयन्त्रप्राणभूतमिदं प्रमेयमिति प्रपञ्चितम्। स्वप्नजाग्रत् सुषुप्तीनामिच्छाज्ञानक्रियात्वं प्रसिद्धिमार्गतया प्रतिपादयति सुप्तिक्रियेत्यादि। क्रियात्वे जाडयं हेतुतयोक्तम्। क्रियाखलु स्मृतिविलक्षणसाक्षादनुभवरूपतया बहिरुपसन्धानं तज्ज्ञानरूपान्तरानुसंधानबदजडं न भवतीति क्रियाया जडत्वमनुभवसम्प्रतिपन्नम्।

# भाषा टीका

## सूत्रसार -

संसार की समस्त वस्तुएँ इच्छा-ज्ञान-क्रिया के अन्तर्गत वर्गीकृत हैं। अत: समस्त कलात्मक वास्तु जगत् त्रिरूप है, यथा लोकत्रय, वर्णत्रय, वेदत्रय आदि। अर्थात् परं तत्त्व की इच्छाज्ञान क्रिया तीन रूपों में अभिव्यक्ति सकल वस्तुओं चकी त्रिरूपता का कारण है। सुषुप्ति आदि तीनों प्रकृत दशाएं भी इच्छा आदि रूप हैं। अतुएव सुषुप्ति, स्वप्न, जाग्रत् अवस्थाओं के तीनों रूप इच्छा ज्ञान-क्रियात्मक प्रतिपादित किये गये हैं। सूत्रकार की यह उक्ति सामान्य है जिसका तात्पर्य-भूत रहस्यमय सिद्धान्त टीकाकार ने व्यवहारिक अनुभूति एवं पारम्परिक गुरु-मुखागत उपदेश के आधार पर यहाँ स्पष्ट किया है।

इच्छा-ज्ञान-क्रिया परस्पर एक दूसरे की मूल हैं ऐसा पूर्व में सिद्ध किया गया है। अत: सुषुप्ति, स्वप्न, जाग्रत अवस्थाएं भी इच्छा-ज्ञान क्रियात्मक होने के कारण परस्पर एक दूसरे की मूल हैं ऐसा सिद्ध होता है। इस प्रकार निष्कर्षत: तीनों दशाएं अन्योन्य मूलक होने के कारण प्रत्येक समान रूप से प्रधान है। इस कारण त्रिकोण भाव में तीनों दशाएं एक दूसरे के आदि, मध्य, एवं अन्त रूप से संभावित हैं। इस प्रकार परस्पर आदि मध्य अन्त रूप में व्यवस्थित सुषुप्ति आदि प्रत्येक दशा में इच्छा-ज्ञान का भाव सम्भावित है।

अत: भेद, अभेद, एवं भेदाभेदात्मक संसरणों के अन्तर्गत सुषुप्ति आदि प्रत्येक अवस्था में इच्छा-ज्ञान-क्रिया की स्थिति का विवरण प्रस्तुत किया जाता है।

(१) भेदात्मक संसरण में सुषुप्ति इच्छारूप, स्वप्न ज्ञान रूप एवं जाग्रत् क्रिया रूप है।

भेदात्मक संसरण में विश्रान्ति का रूप भेदाकार है एवं भेद संसार में इच्छा प्रथम पद है, इन कारणों से इच्छा को सुषुप्ति के रूप में निरूपित किया गया है। स्वप्न अवस्था में विश्रान्त का किञ्चित संकोच हो जाता है अत: स्वप्न को ज्ञान रूप कहा गया है। इच्छा आरम्भ पद है, प्रारब्ध का किञ्चितसिद्ध पद ज्ञान है। अतएव ज्ञान में इच्छा की अभिव्यक्ति स्फुटतर हो जाती है। इसी प्रकार विश्रान्ति के स्वरूप की स्पष्टतर अभिव्यक्ति स्वप्न में होती है अत: ज्ञान का स्वरूप स्वप्न में स्फुरित होता है। जाग्रत अवस्था में

क्रिया का पर्यवसान होता है अतः प्रारब्ध इच्छा के प्रसार का सरल मार्ग क्रिया है। तात्पर्य यह कि इच्छा करता हूं, जानता हूं, एवं करता हूं इन तीनों ही पदों में उद्यम की ही व्यवस्था है तात्पर्य यह कि जब शिव का जीवत्व की ओर संसरण होता है तब इच्छा ज्ञान क्रिया तीनों पद उद्यम है। इसी प्रकार विश्रम क्रिया के उद्यम में प्रथम पद जाग्रत है अतः जाग्रत को इच्छा पद के रूप में प्रतिपादित किया जाता है। किसी एक उद्यम की निष्पत्ति तथा अन्य उद्यम की प्रवृत्ति के मध्य में विश्रान्ति अवस्था की स्थिति होती है। अतः जाग्रत की विरति में विश्रान्ति का लक्षण इच्छा है। विश्रान्ति का लक्षण अन्यत्र भी इसी सिद्धान्त के अनुसार करना चाहिये।

निवृत्यात्मक संसरण में जाग्रत् के पश्चात् स्वप्न अवस्था की स्थिति है। विश्रान्ति के किञ्चित उन्मीलन के कारण स्वप्न दशा ज्ञान-रूप है।

विश्रम रूपी क्रिया की अनुसन्धातृ होने के कारण सुषुप्ति क्रिया है। इस प्रकार भेदात्मक संसरण एवं विश्रमण उभय उद्यमों में सुप्ति एवं जाग्रत् में से प्रत्येक को इच्छा रूप एवं क्रिया रूप तथा स्वप्न को ज्ञान रूप सिद्ध किया गया है।

(२) अभेद अर्थात् अजड संसरण में स्वप्न प्रथम पद, जाग्रत द्वितीय पद तथा सुषुप्ति तृतीय पद है। अर्थात् यहां अवस्थाओं का क्रम स्वप्न-जाग्रत सुषुप्ति रूप में है।

विकल्प एवं अविकल्प रूप होने के कारण अजड-विश्रान्ति रूप स्वप्न प्रकाश पद है एवं जड-विश्रांति रूप सुषुप्ति विमर्श पद है। स्वप्न एवं सुषुप्ति जब एक दूसरे के भाव को ग्रहण करते हैं (अर्थात् जब स्वप्न प्रथम पद एवं सुषुप्ति अन्तिम पद होते हैं) तब स्वप्न जडी भाव क्रिया का प्रारम्भिक रूप होने के कारण इच्छा है। मध्यम - पद जाग्रत् ज्ञान रूप होता है। जाग्रत् में प्रकाश का अवभास (स्वप्नावस्था के समान अन्तः में न होकर) यद्यपि बाहिर होता है, इस कारण वेद्यांश में जडता का रूप उत्पन्न हो जाता है तथापि यह प्रकाश का रूप ही है। अतः जाग्रत ज्ञान रूप कहा गया है। सुषुप्ति में क्रिया के जडत्व का पूर्ण रूप से अनुसन्धान होता है अतः सुषुप्ति क्रिया रूप हैं। निवृत्त्यात्मक संसरण में जब जड-स्वरूप सुषुप्ति का पुनः प्रकाश रूप में आविर्भाव होता है तब यह अजडी-भाव-प्रक्रिया उद्यम ही है जिसमें अजडी भाव का प्रारम्भ रूप होने से सुषुप्ति इच्छा पद ग्रहण

करती है। वेदक के प्रकाश की स्पृष्टि के कारण जाग्रत् ज्ञान पद है इस अवस्था में वेद्य में वेदक के प्रकाश के कारण किञ्चित् चिद्भाव का उदय हो जाता है। निवृति रूप इस संसरण में स्वप्न अजड-क्रिया के अनुसन्धान के कारण क्रिया रूप है। इस प्रकार अभेद संसरण में स्वप्न एवं सुषुप्ति प्रत्येक इच्छा एवं क्रिया का रूप है। जाग्रत ज्ञान का रूप है।

(३) इसी दिशा में जडाजड संसरण के अन्तर्गत जाग्रत् एवं स्वप्न प्रमाताओं की अन्योन्य भाव में परिग्रह की प्रक्रिया में बिन्दु एवं विसर्ग के श्लेशात्मक स्वरूप के कारण जडाजड़-विश्रान्ति रूप सुषुप्ति की स्थिति मध्य में निश्चित होती है। अतः जाग्रत् एवं स्वप्न प्रत्येक इच्छा का रूप है। विश्रान्ति रूपा सुषुप्ति चिदाचित् रूप होने के कारण ज्ञानाकार प्रतिपादित की गई है। सुषुप्ति अवस्था में अवस्थित जीव विश्रान्ति के बोध के कारण शिवस्वरूप हो जाता हैं, तथा सुषुप्ति अवस्था में शिव जडत्व की अनुभूति के कारण जीव स्वरूप होता है। अतः शिवत्व एवं जीवत्व उभय की अनुभूति का स्थल होने के कारण जडाजड संसरण में सुषुप्ति का स्थान जाग्रत् एवं स्वप्न के मध्य में है।

इस प्रकार सुषुप्ति आदि तीनों अवस्थाओं में विलोम अथवा अनुलोम किसी भी उपक्रम से अवस्था त्रय के प्रवाह में शिव-शक्ति के अन्योन्य भाव की ही स्थिति सम्यक रूप से सिद्ध होती है। अतएव सुप्ति आदि दशा त्रय के अवबोधक मातृका अर्थात्-वर्णमाला के स्वर आदि तीनों खण्डों का किसी भी उपक्रम से आवर्तन सम्प्रदाय के सिद्धान्त के अनुरूप है।

टीकाकार ने उपर्युक्त सिद्धान्त के समर्थन में लघुस्तोत्रकार का प्रमाण रूप में उल्लेख किया है। लघुस्तोत्रकार का मत है कि मातृका संग्रह रूप बाला मन्त्र का किसी भी बीज के उपक्रम से सुप्ति आदि किसी भी स्कन्ध के अनुलोम अथवा विलोम प्रवाह में स्कन्धत्रयात्मक श्री चक्र का सपर्या में विधान है जो अनुभव द्वारा पूर्ण रूप से सिद्ध है। दशाओं की उपर्युक्त प्रक्रिया के अनुसन्धान से प्रपश्चित सिद्धान्त आचार्य प्रमुख की अनुभूति पर भी आश्रित है। अतः यह सिद्धान्त सब प्रकार से प्रमाणित होने के कारण महामन्त्र एवं श्रीचक्र का प्राण भूत है।

प्रसिद्ध मार्ग के अनुसार स्वप्न-जाग्रत-सुषुप्ति में इच्छात्व, एवं क्रियात्व का प्रतिपादन करते हैं। क्रिया साक्षात् अनुभव रूप है। अतः यह स्मृति से

विलक्षण है। इस कारण क्रिया का वाह्य उपसन्धान किया जाता है। क्रिया का स्वरूप आन्तर-अनुभूत ज्ञान के समान अजड नहीं है अपितु जड है अतएव स्वप्न दशा ज्ञान है, जाग्रत् दशा क्रिया है तथा क्रिया एवं ज्ञान का मिश्रित रूप इच्छा को सुषुप्ति दशा मान्य किया गया है।

## एकविंशतिं सूत्रम्

अन्योन्य लीनवपुषोरिहचैत्यचित्योः
सुप्त्यादिषु त्रिषुपदेषु भवो द्विरूपः।
श्लिष्टः प्रवृत्तिविनिवृत्तिमयोविभाव्यः
श्रीचक्रमूलमनुसंस्थिति दर्शनेना।।२१।।

### व्याख्या

उक्त मर्यादया सूचिते सुषुप्त्यादीनां जडाजड स्वभावतया द्वैरूप्येणावस्थानं स्फुटी-करोति। अन्योन्यलीनवपुषोरित्यादि। सुप्त्यादिदशात्रयं खलुचिच्चैत्य पर्याययोः शिवजीवयोः सँसरण-विश्रमण व्यवहारपदं स्वरूपमेव। प्रकाशविमर्श पर्याययोश्चिच्चैत्ययोरन्योन्यलीनत्वं स्वभावः। प्रकाशेखलु विमर्शवासना नित्येनावस्थितता विमर्शेच प्रकाश वासना तयोरन्योन्य स्वभावोपादान स्वाभावत्वात्। तथैव जडाजडत्व व्यवस्थया तयोः प्रत्येकं स्वरूपभूते सुप्त्यादि दशात्रये अजडे जडं जडेऽवाऽजडमपि वासना रूपेण निलीनं पर्यायेण परिस्फुरतीति सूत्रतात्पर्यम्। चैत्यचित्योरिति। चैत्यशब्दस्य पूर्वनिपातेन माया प्राबल्यात् चैत्यपर्याय जीवदशानामेव प्रथमपर्यायस्फुरणमित्यभि सन्धिः। चैत्यचित्योर्जीवशिवयोः क्रमेण प्रवृत्तिनिवृत्तिमयः अत एव द्विरूपो भवः संसारः सुष्त्यादिषु त्रिषु पदेषु श्लिष्टोन्योन्य निलीनो विभाव्यः। जीवशिवपदानामन्योन्य निलीनतालक्षण श्लेषनिर्णयेभूलमाह। श्रीचक्रेत्यादि। चक्रं नवत्रिकोण श्लेष विशिष्टं यन्त्रं मूलमनुर्मातृकातयोः संस्थितिः संस्थानविशेषः तद्दर्शनेन पर्यालोचनेन श्रीचक्रसंस्थितिश्चतुर्दशारादि स्कन्धत्रयेऽपि अतिस्कन्धं त्रिकोणयोश्लेषः तेन श्लेषेण प्रत्येकं त्रैरूप्येणावस्थितानां शिवजीवदशानामन्योन्य निलीनताध्यवसायेन पर्यायेण स्फुरणप्रतिपत्तिः मूलमनुसंस्थितिः खण्डत्रयस्यानुलोमविलोमवर्तनं तेन च प्रवृत्तिनिवृत्ति रूप व्यवस्थयान्योन्य निलीबानां जीवशिवदशानां पर्यायेणोल्लसन प्रतिपत्तिरिति विवेकः।।२१।।

# भाषा टीका

## सूत्रसार -

पूर्व सूत्र के अनुसार त्रिरूप में प्रतिपादित सुषुप्ति आदि दशाओं का जडाजडात्मक स्वभाव है, जिसके कारण इनकी जड एवं अजड दो रूपों में अवस्थिति है, जिनको इस सूत्र में स्पष्ट करते हैं।

अन्योन्य-लीन-चैत्य-चित् की सुषुप्ति आदि तीनों दशाओं का प्रवर्तन दो रूपों में होता है। प्रवृत्ति-निवृत्तिमय यह दोनों रूप परस्पर श्लिष्ट हैं। इस प्रकार श्लेश का स्पष्टीकरण श्रीचक्र के अन्तर्गत मातृकाओं की स्थिति के अवलोकन से होता है।

शिव एवं जीव का स्वाभाविक रूप में संसरण एवं विश्रमण होता है। चैत्य एवं चित् का पर्याय जीव एवं शिव है। अतएव चैत्य एवं चित् की सुषुप्ति आदि दशात्रय का स्वरूप भी जीव-शिव की दशाओं के समान संसरणात्मक एवं विश्रमणात्मक है। चित्-चैत्य प्रकाश एवं विमर्श का भी पर्याय है। अतएव प्रकाश-विमर्श के समान (सूत्र १३) चित्-चैत्य भी स्वभाव के एक दूसरे में लीन हैं। स्वभाव से विमर्श का उपादान प्रकाश एवं प्रकाश का उपादान विमर्श है। इस कारण विमर्श में प्रकाश की वासना तथा प्रकाश में विमर्श की वासना नित्य है। अतः सूत्र का तात्पर्य है कि जडत्व एवं अजडत्व की व्यवस्था के कारण प्रकाश एवं विमर्श की स्वरूप भूत चैत्य-चित् की सुषुप्ति आदि दशात्रय के अन्तर्गत अजड में जड की वासना तथा जड में अजड की वासना लीन रहती है। प्रकाश रूप अजड का जडावस्था में तथा विमर्श रूप जड का अजडावस्था में विकल्प से एक का दूसरे में स्फुरण होता रहता है।

सूत्र में "चैत्य-चित्योः" शब्द का प्रयोग है। इसमें चैत्य शब्द का उल्लेख प्रथम है चित् का पश्चात् में। चैत्य शब्द के प्रथम उल्लेख करने के कारण का स्पष्टीकरण करते हुए टीकाकार ने व्यक्त किया है कि माया के प्राबल्य अर्थात् प्रधानता के कारण चैत्य की पर्यायभूत जीव दशा का स्फुरण प्रथम होता है। अतः इस तथ्य को प्रकट करने के हेतु चैत्य शब्द का निपात प्रथम किया गया है, तत्पश्चात् चित् शब्द का, क्योंकि जीव का चित् की ओर संसरण बाद में होता है।

चैत्य-चित् अर्थात् जीव-शिव की प्रवृत्ति एवं निवृत्ति क्रम से होती है, अतएव सुषुप्ति आदि तीनों अवस्थाओं में द्विरूप संसरण श्लिष्ट होता है। अर्थात् जडाजडात्मक संसरण अन्योन्य लीन है।

श्रीचक्र के अन्तर्गत वर्मों की स्थिति के अध्ययन से शिव जीव पदों के अन्योन्य-श्लेष का सूत्रकार द्वारा प्रतिपादित भाव स्पष्ट हो जाता है।

शिव की प्राणेश्वरी शक्ति के प्रतीक श्रीचक्र के अन्तर्गत नव त्रिकोण हैं, जिनको चक्र में विशिष्टतया श्लिष्ट रूप में चित्रित किया गया है। इन परस्पर श्लिष्ट नव-त्रिकोणों में मातृकाओं का विशेष संस्थान है, जिसकी पर्यालोचना से श्रीचक्र की संस्थिति स्पष्ट हो जाती है।

सूत्र में प्रयुक्त "मूलमनुसंस्थिति" का तात्पर्य है कि श्रीचक्र के अन्तर्गत चतुर्दशार आदि तीनों स्कन्धों में से प्रत्येक स्कन्ध में त्रिकोणों का श्लेष दर्शाया गया है। इस श्लेष का तात्पर्य है कि शिव एवं जीव की त्रैरूप्य दशाओं के अन्योन्य-लीन अध्यवसाय का स्फुरण अर्थात् प्रतिपत्ति पर्याय से (क्रम से) होती है। इस तथ्य को टीकाकार पुनः स्पष्ट करते हैं कि जाग्रत्-स्वप्न-सुषुप्ति तीनों खण्डों के अनुलोम एवं विलोम प्रवर्तन से प्रवृत्ति-निवृत्ति रूप व्यवस्था के कारण शिव जीव की अन्योन्य-लीन दशाओं का पर्याय (क्रम) से उल्लास होता है, उसी को स्फुरण या प्रतिपत्ति के नाम से कहा है, जिसका ज्ञान श्रीचक्र के अन्तर्गत वर्णों की व्यवस्था के अध्ययन से होता है।

## द्वाविंशतिं सूत्रम्

**इच्छा सुषुप्तिरवहिर्जनितः प्रबोधो**
**ज्ञानं क्रिया भवति जागरणं जडस्य।**
**तुर्यस्य जागर पदादि सुषुप्ति सीमा**
**इच्छादयः खलु दशास्त्वजडाः शिवस्य।।२२।।**

### व्याख्या

**इदानीं विवृतीषत्स्पृष्टि स्पृष्टीषत्थिवृत्ति विवृति प्रयत्नक्रमेण व्यस्थित मन्त्र संस्थानेनावबोध्येन सुप्त्यादि जाग्रदन्त जाग्रदादि सुषुप्त्यन्त प्रवृत्ति निवृत्ति**

मार्गेजीवशिवयोः संकोचपूर्ण भावाभिव्यक्तिः सहृदय सामयिक हृदयङ्गमेति। तन्मार्गोपाश्रयेण तत्समयमव वोधयितुकामः सुप्त्यादीनामिच्छादि भावमुपपादयति। इच्छासुषुप्तिरित्यादि सुषुप्तिरिच्छाभेद संसारइत्यभिप्रायः अवहिरन्तजनितः प्रबोधः स्वप्न ज्ञानं जागरणं जाग्रदवस्था क्रिया जडस्य जीवस्येवेच्छादीनां समवायनिर्देशः। तुर्यस्येत्यादि। उक्त खलु प्राक् जाग्रत्स्वप्न सुषुप्तीनाभेद विषयत्वे तुर्य व्यवहार इति। तदभिप्रायेणा त्रोक्तम्। तुर्यस्य जागर पदादीति। तुर्यस्थं त्वर्य व्यवहार लग्नं यदभेद रूपं जागरपदं तदादित आरभ्य सुषुप्तिसीमाः तुर्यस्थेन वा सुषुप्तिः तदवधिकाः अभेद जाग्रत् स्वप्न सुषुप्तयः इत्यर्थः। अजडा तुर्यत्वेनाजडत्वे सिद्धे पुनरजड विशेषणमनुष्ठानतया योजनीयम्। शिवस्येच्छादयो दशा भवन्ति। ननु प्रकाशमयः शिवः प्रवृत्त्यभिमुखो विमर्शमयः पशुर्निवृत्त्यभिमुख इति प्रागुक्तम्। कथमत्र निवृत्तिरूपिणी तुर्यदशा शिवस्येत्युक्तमितिचेद् उच्यते। निवृत्यभिमुख पशु शिव इत्येव व्यवह्रियते। प्रवृत्त्यभिमुख शिवश्च पशुरित्येव व्यवहार मुपलभत इति महागुरोः सूत्रकारस्य निरवद्यः प्रवचनमार्गः।।२२।।

## भाषा टीका

### सूत्रसार -

जड अर्थात जीव अवस्था में इच्छा सुषुप्ति है, अन्तः में प्रादुर्भूत स्वप्न ज्ञान है। तथा जाग्रत अवस्था क्रिया है। तुर्य दशा में स्थित जाग्रत्. स्वप्न सुषुप्ति चिदात्मक शिव की इच्छा, ज्ञान एवं क्रिया का स्वरूप है।

समय सिद्धान्त का मत है कि मातृका मन्त्र की व्यवस्था विवृति, ईषत्-स्पृष्टि, स्पृष्टि, ईषत्-विवृत्ति एवं विवृत्ति रूप में क्रम से की गई है। जो प्रवृत्ति मार्ग में सुषुप्ति से जाग्रत् पर्यन्त शिव के पूर्ण सङ्कोच भाव की अभिव्यक्ति है। तथा निवृत्ति मार्ग में जाग्रत् से सुषुप्ति पर्यन्त जीव के पूर्ण सङ्कोच-त्याग का अवबोधक है। अतः इस क्रम से मातृका मन्त्र के द्वारा समय सिद्धान्त का बोध कराने के हेतु सुषुप्ति आदि अवस्थाओं को इच्छा आदि भाव में इस सूत्र में प्रतिपादित किया गया है।

सुषुप्ति में संसरण अभेदात्मक होता है। सुषुप्ति दशा इच्छा है। ज्ञान का अविर्भाव आभ्यन्तर में होता है अतः अन्तः जनित-ज्ञान स्वप्न है। जाग्रत् अवस्था जड जीव की इच्छा आदि का कारण है अतः जाग्रत् अवस्था क्रिया हैं।

पूर्व में अभेदात्मक जाग्रत्-स्वप्न सुषुप्ति को तुर्य नाम से प्रतिपादित किया गया है। अतएव वर्तमान सूत्र के उत्तरार्ध में तुर्यस्थ अभेद जाग्रत्-स्वप्न सुषुप्ति को शिव की इच्छा-ज्ञान-क्रिया के रूप में सम्पादित किया है।

विगत सूत्र में प्रकाशात्मक शिव को प्रवृत्ति अभिमुख सिद्ध किया गया है। अतएव निवृति रूपिणी तुर्य दशा को शिव की दशा के रूप में प्रतिपादन करना शङ्का का विषय हो जाता है। कारण यह है कि निवृति अभिमुख जीव के द्वारा तुर्य की दशा का अनुभव किया जाता है अतः तुर्य को जीव सम्बन्धिनी दशा प्रतिपादित करना चाहिये इस शङ्का के समाधान के लिये टीकाकार लिखते हैं कि निवृत्ति अभिमुख जीव का शिव रूप में व्यवहार किया जाता है तथा प्रवृति-अभिमुख शिव को जीव नाम से व्यवहृत किया जाता है। अतएव सूत्रकार द्वारा निवृत्ति रूपिणी तुर्य को शिव की दशा के रूप में निरूपित किया जाना निर्दोष है।

## त्रयोविंशतिं सूत्रम्

**अन्तर्मुखी भवति बिन्दुगतिर्विसर्ग**
**स्योक्तागतिर्गुरुजनेनबहिर्मुखीति।**
**पूर्वंसुषुप्तिपदमध्यमुपैति जाग्रन्**
**मध्यात्तमृच्छतिपरस्तुसुषुप्तिमध्यात्।।२३।।**

## व्याख्या

**जीवशिवयोर्वहिर्मुखान्तरमुखतयान्योन्य विलक्षण स्फुरणमुपपत्तिमदेवेति प्राक्प्रतिपादित प्रक्रयाममुस्मारयन्नाह। अन्तर्मुखीत्यादि। बिन्दुगतिरन्तर्मुखीभवति विसर्गस्यगतिर्वहिर्मुखीति। गुरुजनेनोक्ता। तयोर्विश्रमणंसंसरण स्वभावतेति प्राक्प्रतिपादितत्त्वादत्राप्रतिपादनमितिमन्तव्यम्। अतः कारणात् पूर्वोपसन्निहित-वाक्ये पूर्वनिर्दिष्टो बिन्दुः सन्निहितवाक्यपूर्वनिर्दिष्टो जाग्रन्मध्यात्सुषुप्ति-पदमध्यमुपैति तिसृणामपिदशानाँ प्रत्येकं जडाजड भागद्वयस्यप्रतिपा-दितत्वान्मध्यदेशोभागद्वयस्यसन्दिरित्यवगभ्यते। जडाजड जाग्रत्परसमाप्त्य-नन्तरादबुद्धं तुर्यापर्यायाजडजाग्रत् प्रारम्भपदंजाग्रन्मध्यं ततः पूर्वावधेः सुषुप्तिपद मध्यं अभेद सुषुप्ति परिसमाप्तिपदमुत्तरावधिमुपैति। परस्तु उत्तरनिर्दिष्टो**

**विसर्गइत्यवगम्यते। सुषुप्ति मध्यात् अजड सुषुप्तिपरिसमाप्त्यनन्तरोद्‌बुद्ध जडसुषुप्तिप्रारम्भ पदात्पूर्वावधेः तं जाग्रन्मध्यं भेद जाग्रत्परिसमाप्ति पदमुत्तरावधिमृत्छति गच्छति। एवंबिन्दुविसर्गयोरन्तरवहिः प्रसरण प्रक्रया मन्त्रार्थ विवेकादिनात्यन्तोपयोगिनीति सूत्रकारेण स्फुटीकृतेति वेदितव्यम्।।२३।।**

## भाषा टीका

पूर्व सूत्र में शिव की अन्तर्मुखी एवं जीव की बहिर्मुखी अन्योन्य विलक्षण गति का प्रतिपादन किया गया है। इसी सिद्धान्त के अनुसार विन्दु एवं विसर्ग की गति को अन्तर्मुख एवं बहिर्मुख प्रतिपादन करते हैं।

सम्प्रदाय के गुरुजनों के अनुसार विन्दु की गति अन्तर्मुखी एवं जीव की गति बहिर्मुखी कही गई है। विन्दु एवं विसर्ग के स्वभाव को पूर्व में ही विश्रमणात्मक एवम् संसरणात्मक प्रतिपादित किया जा चुका है अतः यहां पुनः प्रतिपादन करने की आवश्यकता नहीं है।

उपर्युक्त कथन के अनुसार यह निष्कर्ष मिलता है कि विन्दु, निवृत्त्यात्मक संसरण में जाग्रत्-मध्य से संसृत होकर सुषुप्तिमध्य में सन्निविष्ट होता है।

जाग्रत्, स्वप्न, सुषुप्ति दशाओं में से प्रत्येक दशा का विभाजन जड़ एवं अजड़ नामक दो भागों में प्रतिपादित किया गया है; इस कारण इन दशाओं के जड़ एवं अजड़ भागद्वय के मध्य देश को सन्धि नाम से कहा गया है। इस नियम के अनुसार जड़ जाग्रत् की समाप्ति के अनन्तर अनुभूत तुर्य की पर्यायभूत अजड़-जाग्रत् का प्रारम्भ-पद जाग्रत्-मध्य के नाम से सम्बोधित है तथा अजड़ (अभेद) सुषुप्ति की परिसमाप्ति के अनन्तर एवं जड़-सुषुप्ति के प्रारम्भ के पूर्व सन्धि में उद्‌बुद्ध पद को सुषुप्ति-मध्य कहा गया है। सुषुप्ति-मध्य की उत्तरावधि जड़-सुषुप्ति है।

मध्य-पद की उपर्युक्त परिभाषा के अनुसार विन्दु की अन्तर्मुखी गति से तात्पर्य है कि निवृत्त्यात्मक संसरण में विन्दु जाग्रत्-मध्य पद से (अर्थात् जड़-जाग्रत् एवं अजड़-जाग्रत् के सन्धि पद से) सुषुप्ति-मध्य पद की उत्तरावधि अर्थात् जड़-सुषुप्ति में सन्निविष्ट होता है।

सूत्र के अन्तिम चरण में निर्दिष्ट पर अर्थात् विसर्ग की बहिर्मुख गति से तात्पर्य है कि विसर्ग अवस्था में विन्दु की प्रवृत्ति सुषुप्ति-मध्य से जाग्रत्-मध्य पर्यन्त होती है। अजड़-सुषुप्ति भी परिसमाप्ति के अनन्तर उद्‌बुद्ध जड़-

सुषुप्ति के प्रारम्भ पद को यहां सुषुप्ति-मध्य कहा गया है। इस प्रकार विसर्गावस्था में विन्दु का संसरण सुषुप्ति के अन्तर्तम पद से (अर्थात् अजड़-सुषुप्ति की परिसमाप्ति के अनन्तर उद्‌बुद्ध जड़-सुषुप्ति के प्रारम्भ पद से) जड़-जाग्रत् की अन्तिम-सीमा पर्यन्त होता है। यह विसर्ग की बहिर्मुखी गति है।

सूत्रकार द्वारा कृत विन्दु-विसर्ग की अन्तर्बहिः प्रसरणप्रक्रिया का स्पष्टीकरण मन्त्रार्थ के बोध के लिए आवश्यक है।

## चतुर्विंशतिं सूत्रम्

सुप्त्यादि जाग्रदवधि त्रितयं दशानां
जन्तोः प्रवृत्ति वपुषोऽथ निवृत्तिमूर्त्तेः
तज्जाग्रदाद्यवधि भूत सुषुप्ति शम्भो
रारोहसीम समुपक्रमणोऽवरोहः।।२४।।

### व्याख्या

**उक्तमेवार्थं दृढ़ीकरणाय उपपत्त्यन्तरोपन्यासेन प्रतिपादयति सुप्त्यादीत्यादि। प्रवृत्ति स्वरूपस्य जन्तोर्जीवस्य दशानां त्रितयं सुप्त्यादिजाग्रदवधि प्रागुक्त मर्यादिवेति भावः अथेति पक्षान्तरे। निवृत्तिमूर्त्तेः शम्भोर्दशानां जाग्रदादि अवधिभूत सुषुप्ति सुषुप्त्यवधिमित्यर्थः। अत्र च प्रागुक्तप्रक्रियानुसन्धातव्या। जीवदशा प्रवहणवैलक्षण्येन शिवदशानां जाग्रदादि प्रवहणप्रक्रियायामुपपत्तिमाह। आरोहेति। आरोहस्य आरोहण रूपक्रियायाः यासीमा अवधिः तत्समुपक्रमणं तत्प्रारम्भः खल्ववरोहः प्रसिद्धः। तस्मात्प्रवृत्तिरूप सजीवदशावधिपदं जाग्रदवरोह पर्याय निवृत्तिरूप शिवदशानां प्रारम्भपदं भवतीत्युपपद्यत इत्यर्थः।।२४।।**

### भाषा टीका

पूर्व सूत्र में प्रतिपादित सिद्धांत को अन्य उपपत्ति के द्वारा दृढ़ करते हैं।

पूर्व सूत्र में जीव की दशा सुषुप्ति से जाग्रत् पर्यन्त निर्धारित की गई है तथा निवृत्ति-मूर्ति शम्भू के संसरण की प्रक्रिया जाग्रत् से सुषुप्ति पर्यन्त कही गई है। अन्य शब्दों में प्रवृत्ति एवं निवृत्ति दशाओं को आरोह एवं अवरोह नाम से भी सम्बोधित किया जा सकता है।

आरोहण-प्रक्रिया की सीमा के प्रारम्भ को आरोह कहते हैं। अतः प्रवृत्ति रूप सजीव दशा की प्रारम्भिक सीमा सुषुप्ति है। तथा अवरोह की पर्यायवाची निवृत्ति रूप शिव दशा का प्रारम्भ पद जाग्रत् है।

## पंचविंशतिं सूत्रम्

तस्मात्प्रवृत्ति विनिवृत्तिमयोभयार्थः
स्वप्नः सुषुप्तिरपि जाग्रदपीतिगोप्यम्।
भेदानि भेदमय जीवशिवाङ्कानां
षण्णां विमिश्रणमिदं प्रकृतिर्दशानाम्।।२५।।

### व्याख्या

अथारोहावरोहरूपयोः प्रवृत्ति निवृत्तिरारोह पर्याययोरेक विषयत्वोपपत्त्या दशा त्रयस्यैव तद्विषयत्वे दशानां प्रत्येकं भागद्वयाङ्गीकारो रहस्यमार्ग इत्युपदिशति तस्मादिति। प्राक्प्रतिपादित प्रमेयतात्पर्यस्य हेतुत्वमुक्तम् तदुच्यते। जीव एव खलु प्रवृत्तिकर्ता निवृत्तिमङ्गीकुर्वन् शिव इत्युच्यते। शिवो वा प्रवृत्तिपदे जीवशब्देन व्यवहृतः। पुनर्निवृत्तिपदे शिव शब्द व्यवहारं प्राप्नोति नतु जीव शिवयोः पारमार्थिको भेदः अपि तु दशाभेदेनैव इत्येकार्थता। एतदुभयपर्याययोः तयोः प्रकाशविमर्शयोः एवमेकार्थतानुसन्धेया। एवं प्रवृत्तिनिवृत्ति कर्त्रोरेकार्थत्वे वा प्रवृत्तिरूपा क्रिया तस्या एव निवृत्या भाव्यम्। यद्यन्यतः प्रवृत्तिरन्यतोनिवृत्तिः तर्हि जीवस्यान्यत्र प्रागुक्तप्रवृत्ति रूपबन्धानुच्वेदेन्यत्र निवृत्तिरूपा मुक्तिरिति। मुक्तेर्बन्ध्यसहितत्वे न निराकुलानन्दरूपं तल्लक्षणं न प्राप्नोति प्रवृत्तिनिवृत्योरैकपद्यमेवोपपद्यते। तत्प्रवृत्तिरूपस्यैव दशात्रयस्य निवृत्तिरूपतेति प्रत्येकमवस्थाद्वयमङ्गीकर्त्तव्यम्। तदेवावस्थाद्वयं भावद्वयमिति व्यपदिश्यत इति प्राक्प्रमेय तात्पर्यम्।। तस्मादिति हेतुतयोक्तम्। तस्मात्कारणात् स्वप्नः प्रवृत्तिनिवृत्तिमयोभयार्थः सुषुप्तिरप्येवं जाग्रदप्येवमित्येतद् रहस्यम्। एवं प्रवृत्ति निवृत्ति सम्भावित भेदाभेद मयत्वेन प्रत्येकं द्वि स्वभावानां अतएव षण्णां जीवशिवाङ्कानाँ दशानां विमिश्रणमन्योन्यलीनता लक्षण श्लेष। प्रकृति स्वभावः। शिवस्याभ्यन्तरे शक्तिः शक्तेरभ्यन्तरे शिव इति यदा शिवशक्तयोरन्योन्यान्तरावस्थानं तदा भेदविभागेन तदङ्गभूतानां जाग्रदादीनां भागद्वयस्यान्योन्यान्तरावस्थानमिति।।२५।।

## भाषा टीका

पूर्व सूत्र में शिव एवं जीव की जाग्रदादि दशाओं के आरोह एवं अवरोह क्रम की चर्चा की गई है। आरोह एवं अवरोह का पर्याय प्रवृत्ति एवं निवृत्ति हैं, जिनका विषय एक है। इस कारण जाग्रत्, स्वप्न, सुषुप्ति दशाओं में से प्रत्येक दशा के प्रवृत्तिमय एवं निवृत्तिमय दो बाग अङ्गीकार किये गये हैं, जिनका स्वरूप प्रकृतितया विमिश्रित है। इस प्रकार प्रत्येक दशा के प्रवृत्तिमय एवं निवृत्तिमय दो भागों में विभाजित हो जाने से जाग्रदादि तीन दशाओं की संख्या छै हो जाती है। रहस्य मार्ग का यह सिद्धांत इस सूत्र में प्रतिपादित है।

पूर्व सूत्र में प्रतिपादित प्रमेय के तात्पर्य के कारण का निर्वचन यहाँ किया जाता है। प्रवृत्तिकर्ता जीव जब निवृत्ति को अङ्गीकार करता है तब यह शिव नाम से कहा जाता है अर्थात् प्रवृत्ति पद में जीव नाम से व्यवहृत शिव का निवृत्ति पद में पुनः शिव नाम से व्यवहार किया जाता है। जीव एवं शिव का भेद पारमार्थिक नहीं है अपितु दशा भेद के कारण ही शिव एवं जीव में नाम का भेद है। इस कारण जीव एवं शिव में एकार्थता का निर्वचन है। इसी प्रकार जीव एवं शिव के पर्याय रूप विमर्श एवं प्रकाश में भी एकार्थता का अनुसन्धान उचित है।

इस प्रकार प्रवृत्ति एवं निवृत्ति के कर्ता जीव एवं शिव की एकार्थता के कारण प्रवृत्ति एवं निवृत्ति क्रिया में भी एकार्थता प्रकट है; जो प्रवृत्ति रूपा क्रिया है वही निवृत्ति रूपा क्रिया है अर्थात् प्रवृत्ति एवं निवृत्ति दोनों मार्गों में क्रिया का रूप एक है। यदि प्रवृत्ति का कारण अन्यत्र तथा निवृत्ति का कारण अन्यत्र स्वीकार किया जावे तब प्रागुक्त प्रवृत्ति रूप वन्ध के अनुच्छेद के हेतु निवृत्ति रूपा मुक्ति को अन्यत्र खोजना होगा। ऐसी दशा में मुक्ति का स्वरूप पूर्ण रूप से बन्ध रहित नहीं हो सकेगा। तथा मुक्ति का निराकुलानन्द रूप लक्षण दूषित हो जावेगा। अतः कारणात् प्रवृत्ति एवं निवृत्ति को एकपद्य स्वीकार करना ही उपयुक्त है। उपर्युक्त विवेचन से प्रवृत्ति रूप जाग्रत्-स्वप्न-सुषुप्ति तीनों दशाओं की निवृत्तिरूपता स्पष्ट हो जाती है। अतः प्रत्येक दशा की दो अवस्थाएं अङ्गीकार करना उचित है। यह अवस्थाद्वय ही (शिव-जीव) भाव द्वय हैं। प्राक् प्रतिपादित सिद्धान्त के तात्पर्य के रूप में यह उपदेश किया गया है।

इस प्रकार उपर्युक्त कारणों के आधार पर स्वप्नदशा प्रवृत्ति-निवृत्तिमय है।

इसी प्रकार सुषुप्ति एवं इसी प्रकार जाग्रत् दशा के दो भेद हैं। यह रहस्य मार्ग है।

इस प्रकार प्रवृत्ति-निवृत्ति अवस्थाओं से सम्भावित भेदाभेदमयता के कारण प्रत्येक दशा द्वि-स्वाभावात्मक है। अर्थात् प्रत्येक दशा के प्रवृत्ति-निवृत्यात्मक विभाजन के कारण शिव-जीव की दशाओं की संख्या छै हो जाती है।

प्रवृत्ति-निवृत्ति मय इन दशाओं का स्वरूप स्वभाव से विमिश्रित अर्थात् श्लिष्ट है। श्लेष का लक्षण है अन्योन्य-लीनता। अर्थात् प्रवृत्ति-निवृत्तिमय दशाएं परस्पर एक दूसरे में लीन हैं। तात्पर्य यह कि शिव के अन्तः में शक्ति एवं शक्ति एवं शक्ति के अन्तः में शिव की स्थिति है। अतएव यदि उपर्युक्त प्रकार से शिव-शक्ति का अन्योन्य अवस्थान सिद्ध है तब भेदात्मक भाव के कारण उनकी अङ्गभूत जाग्रदादि दशाओं के भावद्वय का भी अन्योन्य आन्तर अवस्थान सिद्ध है।

## षड्विंशतिं सूत्रम्

**स्वप्नप्रजागर सुषुप्तिमथाष्टकोणः**
**पङ्क्त्यस्त्रयुग्ममनुकोण विराजमाने।**
**यन्त्रेश्वरेहि शिवजीवसमन्वयो यं**
**दृष्टः समस्तपरमार्थ विदीष्टदेवे।।२६।।**

### व्याख्या

**एवं भेदाभेदभागयोः प्रत्येकमुपपादिततया द्विरूपस्य जाग्रदेकस्य अन्योन्यश्लेषं तत्रेति बिम्बभूते महायन्त्रे सम्पादयति स्वप्न प्रजागर सुषुप्तिमयैः स्वप्नादि प्रतिबिम्बभूतैः अष्टकोण पंक्त्यस्त्रयको युग्ममनुकोणः अष्टकोण स्वप्न प्रतिविम्बं यकारादि हकारान्तैरष्टभिर्वर्णैं स्वप्नतत्वावयवानां कलादि शक्त्यन्तानां वक्ष्यमाणत्वात् पंक्त्यस्त्रयुग्मं जाग्रत्प्रतिबिम्बं ककारादि नकारान्तैर्विंशत्यावर्णैं जाग्रत् तत्वावयधानां पृथिव्यादि श्रोतान्तानां वक्ष्यमाणत्वात्-मनुकोणश्चतुर्दशकोणः। सुषुप्ति प्रतिबिम्बं अकाराद्यौकारान्तै श्चतुर्दशभिर्ववैं सुषुप्तितत्वावयवानां पृथिवीसंस्कारादि बिंद्वावर्त संस्कारान्तानां वक्ष्यमाणत्वात्।**

**एवं स्कन्धत्रयात्मकैश्चक्रैर्विराजमाने यन्त्रैश्वरी महायन्त्रे अयं शिव जीव समन्वयः प्रत्येक मवस्था त्रयात्मक शिवजीवश्लेषः दृष्टः। दर्शनं चैवं अष्टकोणादिषु चतुर्दश कोणान्तेषु चक्रेषु। योऽयं त्रिकोणद्वयश्लेषः संलक्ष्यते स एव श्लेषो जीव शिवाङ्गभूत स्वप्नाद्यः जडाजड भागश्लेषस्य प्रतिबिम्बमिति। ननु जाग्रदादि दशा त्रयस्य त्रिकोणप्रतिबिम्बमित्युक्तम् एकैकस्मिन् जाग्रदादि पदे कथं त्रिकोणभाव मूलभूता त्रैरूप्योपपत्तिरिति नाशङ्कनीयम्। अवस्थानामिच्छादि रूपतया तस्य चेच्छादित्रयस्य प्राक्प्रतिपादितमर्यादया नित्ययुत स्वभावत्वादेकस्यापि पदे सर्वस्या अपि त्रिपुटया व्यति सङ्गइति निरवद्यम्। यन्त्रेश्वरस्य मातृकाया इव महाप्रमाणतामुपपादयति समस्त इति। समस्त परमार्थविदामनेन विशिष्टोपादेयतोक्ता इष्टदेवे इष्टदेवतारूपेणाभिमते मन्त्रदेवताभ्यामतिरिक्तं नहि प्रमाणम्। अतोमातृका चक्रवोधितोऽर्यो न सशयैरूप स्पृश्यत इति तात्पर्यम्।।२६।।**

## भाषा टीका

स्वप्न-जाग्रत्-सुषुप्ति आत्मक अष्टकोण, पङ्क्तत्यस्र युग्म एवं मनुकोण से युक्त समस्त परमार्थ-सार इष्ट देवात्मक यन्त्रेश्वर श्रीचक्र के अन्तर्गत शिव-जीव का समन्वय दृष्टि गोचर होता है।

जाग्रदादि प्रत्येक दशा भेदाभेदात्मक प्रतिपादित किये जाने के कारण द्विरूप कही गई है। अतः इस सूत्र में दशाओं के विम्बभूत यन्त्र के अन्तर्गत द्विरूप अर्थात् प्रवृत्ति-निवृत्ति रूप जाग्रत् का निरूपण करते हैं।

श्री चक्र के अन्तर्गत स्वप्न का अष्टकोण के द्वारा, जाग्रत् का पङ्क्तयस्र युग्म के द्वारा, तथा सुषुप्ति का मनुकोण अर्थात् चतुर्दशार चक्र के द्वारा अभिव्यञ्जन किया गया है।

स्वप्न-दशा-गत कला, माया, शुद्ध-विद्या, ईश्वर, सदाशिव, आज्ञी, व्यापिका, तथा शक्ति नामक आठ तत्त्वों का अभिव्यञ्जन, य, र, ल, व, श, ष, स, ह व्यापक वर्णों के द्वारा किया जाता है। अतः श्री चक्र में चित्रित व्यापक वर्णात्मक अष्ट कोण स्वप्नावस्ता का प्रतिविम्ब है।

जाग्रत् के अन्तर्गत पृथ्वी से श्रोत्र पर्यन्त वीस तत्त्वों के अभिव्यञ्जक क से न पर्यन्त वीस वर्ण हैं। अतः पञ्चमहाभूत, पञ्चतन्मात्रा, कर्मेन्द्रिय तथा ज्ञानेन्द्रिय का प्रदर्शन श्रीचक्र के अन्तर्गत पङ्क्तयस्र दशार-युग्म के चित्रण

के द्वारा किया गया है।

अकार से विन्दु पर्यन्त चौदह स्वर वर्णों के द्वारा सुषुप्ति के तत्त्वों का बोध होता है। अतः चतुर्दसार सुषुप्ति का प्रतिविम्ब है।

इस प्रकार स्कन्धत्रयात्मक यन्त्रेश्वरी महायन्त्र में शिवजीव का यह समन्वय प्रत्येक अवस्था में श्लिष्ट दृष्टि गत होता है। अर्थात् अष्ट कोण से चतुर्दश कोण पर्यन्त शिव-जीव का ही श्लेष है। श्री चक्र में जो त्रिकोण-द्वय का संश्लेष दिखलाई देता है वह भी शिव-जीव के अङ्गभूत, स्वप्न में समुद्भूत जडाजड भाग के श्लेष का प्रतिविम्ब है।

इस सूत्र की टीका के प्रारम्भ में टीकाकार ने सम्बन्ध निरूपित करते हुए लिखा है। कि जाग्रत दशात्मक शिव-जीव के श्लेष का निरूपण इस सूत्र में है। अतः पूर्व पक्ष शङ्का प्रस्तुत करता है कि त्रिकोण की जाग्रदादि तीनों दशाओं का प्रतिविम्ब प्रतिादित करना चाहिये न कि केवल एक मात्र दशा का किन्तु यह शङ्का निर्मूल है। जाग्रदादि तीनों अवस्थाएं इच्छा-ज्ञान-क्रियात्मक त्रिपुटी का स्वरूप हैं। अतः अवस्थाओं का इच्छा आदि से नित्य सम्बन्ध हैं। अतः इच्छा-ज्ञान-क्रिया में से किसी भी पद में समस्त अवस्थाओं की त्रिपुटी का अवस्थान निश्चित है।

समस्त परमार्थ-रूप इष्ट देवता का यथार्थ रूप में प्रतिपादन करने के लिये मन्त्र देवता के अतिरिक्त अन्य कोई साधन नहीं है। अतः मातृकाचक्र के द्वारा अवबोधित अर्थ को संशय की दृष्टि से नहीं देखना चाहिये। तात्पर्य यह कि वर्णमाला के क्रम का निबन्ध इस प्रकार किया गया है जिससे महाशक्ति के स्वरूप का यथार्थ एवं यथास्थान बोध हो सके। अतः वर्णमाला के द्वारा ही मातृकाशक्ति का बोध सम्भव है अन्य साधन के द्वारा नहीं।

## सप्तविंशतिं सूत्रम्

**सुप्तिः शशी जडतया तपनोऽपि जाग्र-**
**च्चैत्यस्य संतपनमात्र चिदात्मकत्वात्**
**स्वप्नोनलोगिलित चैत्यतया पशुत्वे**
**सोऽप्यर्क एव दहनः सकलं शिवत्वे।।२७।।**

## व्याख्या

अथ स्वरस्पर्श व्यापकानां चन्द्रसूर्याग्नि व्यवहारोपपत्तिस्तदर्थभूत सुषुप्त्यादीनां चन्द्रादित्योपपत्तिमूलेति तत्प्रमेयं व्युत्पादयति। सुप्तिः शशीत्यादि। जडतया जाड्याद्धेतोः सुप्तिः शशी चन्द्रः, ब्रह्माण्डपिण्डाण्डयोरन्योन्य-कारणत्वेनैकस्वभावत्वात्। चैत्यस्य वेद्यस्य घटपटादे सन्तपनमात्र चिदात्मकत्वात् सुषुप्तिगत जाड्यप्रमार्जनादजडत्व स्पृष्टयुप-लम्भनेन यत्सन्तपनं प्रकाशोष्मणा शोषणं न तु तत्संतापनमेतद्दहन तन्मात्रचिदात्मकत्वात् तत्परिपाटी व्यस्थित प्रकाशकात्मकत्वाद्धेतोर्जाग्रदवस्था तपनः सूर्यः जाग्रत परिच्छिन्न प्रकाशात्मकतयावहिर्गतत्वेनैव चैत्यप्रकाशनंसूर्यस्येव न तु वह्निवत् स्वान्तर्गतत्वेन स्वावधिपर्यन्त प्रकाशनमिति भावः गिलित चैत्यतया स्वान्तरूपक्षिप्त चैत्यतया स्वप्नोऽनलः स्वप्ने खलु चैत्यं स्वमनो गर्भ एव निलीनं भाति। एवं वह्नित्वेन संभावितस्य स्वप्नस्य पशुत्व विषये सूर्यत्वमेवाह। पशुत्वे सोऽप्यर्क एवेति स इति स्वप्नः पशुः खलु स्वप्ने स्वमनोगतत्वेन स्वान्तस्थमपि जगन्मायया स्ववहिष्ठमेवानुसन्धत्ते। जाग्रति पतितो जाग्रदिव स्वप्नेऽपि पशोः सूर्य एवेत्यनुभव सम्प्रतिपन्नँ शिवत्वे सुप्त्यादीना विशेषमाह। शिवत्वे सकले दहन इति सकले सुप्त्यादित्रयं दहनोऽग्निरेव सर्वत्र दशायामभेदवासना पाटलेन जगत्कवलनादितिभावः।।२७।।

## भाषा टीका

पशु दशा में सुषुप्ति को चन्द्र, जाग्रत् दशा को सूर्य एवं स्वप्न दशा को अग्नि के रूप में तथा शिव दशा में तीनों अवस्थाओं को अग्नि के रूप में प्रतिपादित किया गया है।

यहाँ समस्त वर्णात्मक श्री मातृकाचक्र को स्वर, स्पर्श एवं व्यापक वर्णों में पुनः विभाजित किया है। अन्तःस्थ तथा ऊष्माण यकार से हकार पर्यन्त वर्णं को व्यापक पद के नाम से व्यवहार किया है। स्वर, स्पर्श एवं व्यापक पदों की क्रमशः चन्द्र, सूर्य एवं अग्नि नाम से उपपत्ति होती है। अतएव स्वर, स्पर्श एवं व्यापक पदों की अर्थभूत सुषुप्ति, जाग्रत् एवं स्वप्न अवस्थायें क्रमशः चन्द्र, सूर्य, अग्नि आत्मक सिद्ध हैं।

सुषुप्ति का स्वभाव जड है तथा शशि का स्वभाव भी जड है, अतः स्वभाव की जडता के सादृश्य के कारण सुषुप्ति अवस्था को चन्द्र के रूप

में निरूपित किया है। कारण का जो स्वभाव होता है वही स्वभाव कार्य का होता है। ब्रह्माण्ड को पिण्डाण्ड का कारण, तथा पिण्डाण्ड को ब्रह्माण्ड का कारण प्रस्तुत मार्ग में स्वीकार किया गया है। अतएव अन्योन्य कार्य-कारण भाव के कारण पिण्डाण्ड एवं ब्रह्माण्ड का स्वभाव एक है। इस सिद्धान्त के आधार पर ब्रह्माण्ड में जो यह जड-स्वरूप चन्द्र है उसी को स्वभाव की जडता के कारण पिण्डाण्ड में सुषुप्ति नाम से सम्बोधित किया जाता है।

चिदात्मकता के कारण चैत्य अर्थात् वेद्य जगत् सन्तपन मात्र है। अर्थात् चिदात्मकता के कारण जडता से प्रमार्जित सुषुप्ति में अजडत्व की स्पृष्टि के उपलम्भ से केवल सन्तपन अर्थात् प्रकाश की ऊष्मा से शोषण होता है (न कि सन्तापन) अतएव चिदात्मकता के कारण सुषुप्ति में आविर्भूत सन्तपन मात्र की परिपाटी से व्यवस्थित प्रकाशात्मकता के कारण जाग्रत् अवस्था को सूर्यात्मक निरूपित किया गया है। प्रकाश का द्विविध स्वभाव है – (१) संतपन (२) संतापन। यहां सुषुप्ति दशा में प्रकाश के संतपन मात्र उद्रेक के कारण तद्भूत जाग्रदावस्था की प्रकाशात्मकता परिच्छिन्न है। अतएव इस अवस्था में सूर्य जगत् को केवल वाह्यतः प्रकाशित करता है, वह्नि के समान स्वान्तर्गत आत्म-बोध की सीमा पर्यन्त वेद्य को प्रकाशित करने का सामर्थ्य सूर्य में नहीं है।

स्वप्नावस्था में चैत्य केवल मनोगत अन्तः में लीन रहता है अतः स्वप्न को वन्हि रूप कहा है, किन्तु इस प्रकार वन्हि से उद्भूत स्वप्नावस्था जीवात्मक संसरण में सूर्य रूप ही है। कारण यह कि पशु दशा में स्वप्न की अनुभूति यद्यपि स्वमनोगत होने से अन्तः में होती है तथापि माया के कारण जगत् का यह अनुसन्धान वाह्य अनुभूति के समान प्रतीत होता है। इस प्रकार अनुभव से भी सिद्ध है कि पशु दशा में स्वप्न भी जाग्रद् के समान सूर्यात्मक है।

शिव दशा में सुषुप्ति आदि तीनों अवस्थाएं वह्नि आत्मक हैं। सभी अवस्थाओं में सर्वत्र अभेद वासना की प्रधानता एवं व्याप्तृत्व शेष रहता है तथा जगत् का लय हो जाता है अतएव शिवत्व में दहनात्मकता का भाव निरूपित है।

# *अष्टाविंशतिं सूत्रम्*

चैत्यातिविस्फुरण सीम्निखलुप्रतिष्ठा
जापत्यणोरथतुरीयपदान्तरार्थे।
शम्भोर्विमर्शवति जाड्यमलव्यपेते
जापत्सुषुप्तिदशयोः सममध्य भागे।।२८।।

## व्याख्या

**अथ जीवशिवयोर्दशात्रयेसर्वत्र वा कुत्रचिद्वा स्वात्माभिमानदार्ढ्यमित्याकाङ्क्षायां मन्त्रतात्पर्यमभि सन्धाय आह-चैत्येति। चैत्यस्यातिविस्फुरणमात्यन्तिक भेदेनोज्जृम्भणं तस्यसीमा अवधिः तत्र जागृति भेदपरमावधौअणोजीवस्यप्रतिष्ठः स्वात्मनोऽभिमान दार्ढ्येनावस्थानम्। जाग्रत्पदबोधितेषु स्पर्शैषु मकारस्य जीवकला स्थानत्वेन वक्ष्यमाणत्वात्। अथ शम्भोर्विमर्श वति अतेव जाड्यमलव्यपेते जाग्रत् सुषुप्तिदशयोः सममध्यभागे अभेद विकल्पपदमत्र जाग्रद्विपक्षितंनिर्विकल्पपदं सुषुप्तिः तयोर्मध्यभागे सन्धि रूपस्य तस्यपदस्यविकल्पाविकल्पोभयपद व्यापकत्वात् अभेद विकल्पाविकल्प सन्धिपदबोधकस्य क्षकारस्य शिवकलास्थानत्वेनवक्ष्यमाणत्वात्।।२८।।**

## भाषा टीका

चैत्य के भेदात्मक स्फुरण की आत्यन्तिक सीमा जाग्रत् है जिसमें जीव की प्रतिष्ठा अर्थात् आत्माभिमान का दृढ़ अवस्थान है। जाग्रत् पद के बोधक स्पर्श वर्ण हैं जिनकी अन्तिम सीमा मकार है। अतः यहां संकेत है कि मकार जीवकला का स्थान है।

जब शम्भु तत्त्व विमर्शित होता है तब जाग्रत् एवं सुषुप्ति दशाएं जाड्य मल से मुक्त हो जाती हैं। इसका तात्पर्य है कि शाम्भवी विमर्श में जाग्रत् एवं सुषुप्ति उभय दशाओं की अभेदानुभूति होती है। अतएव जाग्रत् एवं सुषुप्ति के सममध्य भाग अर्थात् सन्धि में विकलाविकल्प पदों की व्यापकता के कारण अभेद विकल्प पद को जाग्रत् एवं निर्विकल्प पद को सुषुप्ति निरूपित किया है। यह शाम्भवी अवस्था जिसमें जाग्रत् एवं सुषुप्ति की अभेदात्मक अनुभूति होती है तुर्य नाम से सम्बोधित है। इस विकल्पा-विकल्प पद का अवबोधक क्षकार है जिसको शिव कला का स्थान प्रतिपादित किया है।

# उनत्रिंशत् सूत्रम्

माता शशी भवति मेय पदं पशुत्वे
वह्नि प्रमाणमिह तिग्मरुचिः क्रियाग्रयम्।
मातानलः शिवपदे हिमगुः प्रमेयं
ज्ञानाग्र्यभाग इह तुर्य रविः प्रमाणम्।।२९।।

## व्याख्या

**अथ जाग्रन्मध्यपदकस्य मार्गस्य प्रमेयमाह-माता शशीत्यादि। पशुत्वे शशी सुषुप्त्यात्मक स्वरखण्डार्धश्चन्द्रः माता प्रमाता भवति। पशुत्वे चन्द्ररूपस्य वेद्यस्यैव व्याप्तिः मेयपदं बहिः स्वप्नात्मर्क व्यापक खण्डार्धो वह्निः प्रमेय पदं भवति। पशुत्वे वह्नि रूपस्य वेदकस्य व्यप्यत्वात्। इह पशुत्वे तिग्मरुचिः जाग्रदात्मक स्पर्शखण्डार्धः सूर्यः क्रियाग्रं वेद्यांश प्रधान प्रमाणं वेद्यवेदकोमयात्मके प्रमाणे पशु दशायां वेदकांश व्यापकतया वेद्यांश प्राधान्यमवलम्बते। अथ शिवतायां चन्द्रादेर्भावान्तर ग्रहणमाह। शिवपदे अनलपदकः प्रमाता शिवपदे वेदकस्य व्यापकत्वात् तत्र हिमगुश्चन्द्रः। वेद्यं प्रमेयं व्याप्यत्वात् इह शिवतायां तुर्यरविः अभेद जाग्रद्रूपो रविस्तुर्य रविः। ज्ञानाग्रंभागं वेदन-प्रधानांशकं व्याप्तिमत्तया प्रधानभूत वेदकांशं प्रमाणं भवति। अयं सुप्त्यादि स्वप्नान्तभार्गे विवेक इति वेदितव्यम्।।२९।।**

## भाषा टीका

पशु दशा में शशि को प्रमाता वह्नि को प्रमेय एवं क्रिया-पदात्मक सूर्य को प्रमाण के रूप में तथा शिव दशा में वह्नि को प्रमाता, शशि को प्रमेय तथा ज्ञानाग्र्य (ज्ञान प्रधान) तुर्य-रवि को प्रमाण के रूप में प्रतिपादित किया गया है।

बीसवें सूत्र में प्रतिपादित किया है कि जाग्रदादि किसी भी अवस्था का आविर्भाव आदि, मध्य अथवा अन्त किसी भी क्रम में सम्भव है। इस सिद्धान्त के अनुसार यहां अवस्थाओं के सुषुप्ति-जाग्रत्-स्वप्न क्रम से अङ्गीकार कर इस मार्ग को जाग्रन्मध्यम मार्ग के नाम से सम्बोधित किया है, कारण यह कि यहां जाग्रत् की स्थिति का सुषुप्ति एवं स्वप्न के मध्य में उल्लेख किया है।

इस सूत्र में जाग्रन्मध्य मार्ग में जीव एवं शिव के अवस्थात्रयात्मक प्रमाता-प्रमाण-प्रमेय पदों को शशि सूर्य एवं अग्नि तत्त्वों के रूप में प्रतिपादित किया है।

पशु दशा में शशि को प्रमाता कहा है। टीकाकार ने परिभाषा करते हुए सुषुप्ति के अवबोधक स्वर-खण्ड के अन्तर्गत निर्दिष्ट अर्धचन्द्र को शशि के नाम से सम्बोधित किया है। पशुत्व में चन्द्र रूप वेद्य की ही व्याप्ति होती है। अतः व्याप्तित्व के कारण शशि प्रमाता है।

प्रमेय पद को वह्नि के रूप में निरूपित किया है। स्वप्न अवस्था के अवबोधक व्यापक खण्ड के आधे भाग को अर्थात् य, र, ल, व, को वह्नि की संज्ञा दी गई है। पशुत्व में वह्नि रूप वेदक के व्याप्यत्व के कारण प्रमेय को वह्नि कहा है।

पशु दशा में सूर्य को, जिसका अवबोधक जाग्रदात्मक स्पर्श खण्ड का वेद्यांश-प्रधान अर्ध भाग है, उसे प्रमाण पद के रूप में प्रतिपादित किया है। वेदक एवं वेद्य उभय का मिश्र रूप प्रमाण पद होता है। इस दशा में प्रमाण पद के वेदकांश की व्यापकता के कारण वेद्यांश की प्रधानता होती है, अतः यहां पशु दशा में सूर्य का यह भाग जिसमें वेद्यांश प्रधान होता है जो प्रमाण पद है। (स्पर्श वर्णों के क वर्ग एवं च वर्ग को वेद्य तथा ट वर्ग एवं त वर्ग को वेदक कहा जाता है। क वर्ग पञ्चभूतों का तथा च वर्ग तन्मात्राओं का अवबोधक है, अतः प्रमाण रूप सूर्य का यह वेद्यांश है। ट वर्ग एवं त वर्ग इन्द्रियों का द्योतक है अतः यह वेदकांश है। पशु दशा में क्रिया की प्रधानता होती है अतः जाग्रदात्मक सूर्य के प्रमाण पद में क्रिया अर्थात् वेद्यात्मक अंश की प्रधानता निरूपित की गई है।

शिव दशा में जाग्रदादि अवस्थाओं का क्रम अवरोहात्मक होता है अतः पशु दशा में जो प्रमाता होता है वह प्रमेय पद में परिणत हो जाता है तथा प्रमेय पद प्रमाता का पद ग्रहण करता है, इस कारण यहां अनल प्रमाता है तथा वेदक शशि की व्याप्ति परिवर्तित होकर व्यापकता का रूप ग्रहण करती है अतः शशि प्रमेय पद में परिणत हो जाता है। निवृत्ति रूप शिव दशा में सूर्य के वेदक अंश अर्थात् ज्ञानात्मक अंश की प्रधानता रहती है तथा क्रियात्मक वेद्यांश अप्रधान रहता है। अतः जाग्रत् का अभेद रूप जिसको तुर्य-रवि नाम से कहा गया है यहाँ प्रमाण पद है। तुर्य में शिवत्व की अनुभूति होती है जो दशा केवल ज्ञानात्मक है। अतः यहाँ प्रमाण रूप सूर्य का तुर्य-रवि के नाम से सङ्केत किया है।

# त्रिंशत् सूत्रम्

चैत्यप्रमातुरिह यज्जडमेवमानं
तच्चित्प्रमाणमनुजीवति तद्धिचैत्यम्।
चित्तत्वमेव नियमादनुजीवदेतन् -
नात्यश्नुते स्वमिव चित्तदिदं विभेदि।।३०।।

## व्याख्या

अथ विसर्गरूपस्य वेद्यप्रमातुर्भेद रूपतोपपत्तिमाह चैत्य प्रमातुरित्यादि। इह जाग्रन्मध्यमपदके मार्गे चैत्यप्रमातुः चैत्यरूपस्य प्रमातुः जडमेव क्रिया रूपतया जडमेव यावन्मानं प्रमाणं वेद्यकवलन-साधनं तच्चिति प्रमाणं चितः साधनभूतं ज्ञान-रूपं प्रमाणमनुजीवति अनुप्राणिति। अत्रायमभिप्रायः पशुत्वे वेद्यस्य कवलयतः पृथिव्यादि रूपस्य वेद्य प्रमातुस्तत्कवलेन व्याप्तौ साधनं शब्दादि पञ्चकं शब्दादिभिः खलु स्वधर्म भूतैः साधनैः पृथिव्यादयो वेदकं बध्नन्ति।

तत्र शब्दादयो जडत्वाद्वेदकस्य साधनं विमर्शरूपत्वादजडं श्रोत्रादिकमनुजीवन्ति। श्रोत्रादीनामेव शब्दादि व्याप्त्यनु-संधानेन शब्दादीनां व्याप्तिप्रसाद-सिद्धिरितिभावः। अतो वेद्यप्रमाणस्य वेदक प्रमाण सापेक्ष कार्य कारित्वम् तच्च चैत्यं प्रमातृ चित्तत्वमेव नियमादनुजीवति। चित्तत्वाभावे चैत्य व्याप्त्यनु संधातुरर्भावाच्चैत्यव्याप्तेरसिद्धिरेव। अपि च चैत्य स्वरूपस्याप्यसिद्धिः प्रथमतः इति चैत्य व्याप्ति पदे चितः शिरोदर्शनमवश्यमिति। चिद् व्याप्तिपदे चैत्योच्छेदएव चैत्यव्याप्तिपदे चितो नोच्छेदः। अतश्चैत्यं स्वव्याप्तिपदे चित्सहितमेवेति भेदस्योपपत्तिरिति तात्पर्यम्। चित्स्वमिव आत्मानमिव एतच्चित्तत्वं कर्मनात्युश्नुते नात्यन्तमुत्सादयति तत्तस्मात्कारणादिदं चैत्यं बिभेदि भेदवत्।।३०।।

## भाषा टीका

विसर्ग रूप वेद्य-प्रमाता की भेदरूपता के कारण का निरूपण इस सूत्र में किया है।

पशु दशा में चैत्य-प्रमाता के प्रमाण-पद की जडांशता चित्-प्रमाण को अनुप्राणित करती है। अतः सिद्धान्ततः चित्तत्त्व को चैत्य अनुप्राणित करता है

यह सिद्ध है, किन्तु इस प्रक्रिया में चित् तत्त्व का चैत्य के द्वारा पूर्ण उच्छेदन सम्भव नहीं है चित् का आभास शेष रहता है अतः चैत्य पद अर्थात् जीव दशा भेदात्मक है यह सिद्ध होता है।

शिव दशा चित् तत्त्वात्मक है। इस दशा में चिदात्मक श्रोत्रादि ज्ञानात्मक साधनों के द्वारा जड अनुप्राणित होता है। पशु दशा में यह क्रम विपरीत हो जाता है जिसके कारण चैत्य की प्रधानता होने से प्रत्यक्ष ज्ञान अचित् तत्त्व का होता है। तथा चित् के धर्मभूत शब्दादि साधनों के द्वारा चित् तत्व को चैत्य आत्मसात् कर बन्धन में बांध लेता है। अर्थात् चिद्रूप धर्मी चैत्य रूप धर्म के बन्धन में बंध जाता है तथा चैत्य के अन्त में चित् तत्त्व का लोप हो जाता है अतः पशु दशा में चित् की सत्ता का ज्ञान चैत्य रूप प्रमाण के द्वारा होता है। इस प्रकार चित् तत्व को नियम से चैत्य अनुप्राणित करता है, किन्तु शिव दशा में जिस प्रकार चित् तत्त्व के अन्तः में चैत्य का पूर्ण विलय हो जाता है एवं शिवत्व की अभेदात्मक अनुभूति शेष रह जाती है उस प्रकार चैत्य में चित् का पूर्ण लय नहीं होता है; क्योंकि चैत्य की सत्ता का आधार चित् है। यदि चित् की सत्ता का अभाव माना जावे तब चैत्य की व्याप्ति में अनुसन्धाता का अभाव हो जाने के कारण चैत्य की व्याप्ति की असिद्धि हो जावेगी। अतएव चैत्य के स्वरूप की भी असिद्धि निश्चित है। इस कारण चैत्य-व्याप्ति में चित् तत्त्व की सत्ता का दर्शन आवश्यक रूप में अनिवार्य है। इस प्रकार विसर्गात्मक चैत्य की व्याप्ति में चित् तत्व का पूर्ण रूपेण अनुच्छेद न होने से चित् एवं चैत्य उभय तत्वों की सत्ता रहती है अतएव प्रमाणित है कि चैत्य तत्व की दशा भेदात्मक है।

## एकत्रिंशत् सूत्रम्

**जाड्यादचिन्न विमृशत्यपिमातृभावे**
**तां चित्कलेव गिलितात्मपदां मृशन्ति।**
**मोहेन कल्पयति मातृदशाममुष्या**
**व्याप्तिर्हि मातृपद लक्षणतोपपन्ना॥३१॥**

## व्याख्या

उक्तमेवार्थ स्फुटीकरोति जाड्यादित्यादि। अचिच्चैत्यं मातृभावेऽपि स्वव्याप्तिक पदेऽपि जाड्याद्धेतोर्नविमृशति। नहि पृथिव्यादौ चैत्य विमर्शः तां अयति सम्पादयति। एवं चेद्विमर्श वतोः वेदकस्येव वेद्य व्याप्ति पदेऽपि प्रमातृत्वमस्त्विति चेन्नेत्याह। अव्याप्तेर्मातृलक्षणत्वं व्याप्ति मातृतावच्छिन्न प्रमातृलक्षरूप विमर्श वतोऽपि वेदकस्य तृतीय पदमपि व्याप्यत्वाभिमान दोषेन व्याप्यत्वान्न प्रमातृत्वमिति तात्पर्यम्।।३१।।

## भाषा टीका

पूर्व प्रतिपादित सिद्धान्त का स्पष्टीकरण करते हैं।

शिव दशा में विमर्शयुक्त चित् तत्त्व प्रमाता है। पशु दशा में प्रमाता चैत्य है; फलतः चित् के समान ही चैत्य को भी यहाँ प्रमातृत्व के कारण विमर्शवान् निरूपित करना चाहिये, किन्तु इस दशा में चैत्य यद्यपि मातृ-भाव अर्थात् स्वव्याप्ति से युक्त है तथापि जाड्य के कारण यह विमर्शवान् नहीं है। इस दशा में भी विमर्श चित् कला को ही निरूपित किया है।

पशु दशा में चैत्य आत्मपद का अर्थात् प्रमातृ भाव को प्राप्त करते हुए भी विमर्शवान नहीं है अतः पूर्व पक्ष शङ्का करता है कि ऐसी दशा में पशुत्व में भी, चित् को ही प्रमाता निरूपित करने में अधिक औचित्य है, किन्तु यह शंका युक्ति युक्त नहीं है क्योंकि पूर्व पक्ष ने मातृपद के लक्षण पर विचार नहीं किया है। जिस पद की व्याप्ति होती है उस पद को प्रमाता कहा जाता है अर्थात् व्याप्ति-मात्रता प्रमाता का लक्षण है, विमर्शत्व नहीं। अतएव इस लक्षण के अनुसार पशु दशा में व्याप्ति के कारण चैत्य को प्रमाता स्वीकार करना तर्क संगत है। व्याप्ति-पद न होने के कारण चित् को प्रमाता नहीं कहा जा सकता है।

चैत्य दशा में विमर्शकर्ता चित्-वेदक को व्याप्यत्व का अभिमान होता है एवं व्याप्तृत्व का अभाव होने से चित्-वेदक से प्रमाता की परिभाषा के अन्तर्गत नहीं आता है अतः पूर्व पक्ष की शङ्का निराधार है।

# द्वात्रिंशत् सूत्रम्

मानं तृतीयपदभागपि बाह्यतस्तु
मध्ये विमिश्रणमिदं खलु मेयमात्रोः।
मिश्रं हि मध्यमपदे निखिलस्य दृष्टं
द्वैरूप्यमस्य च नपुंसकता च धाम्नः।।३२।।

## व्याख्या

इदानीं स्पर्शार्धस्य जाग्रद्रूपस्य प्रमाणात्मनः सूर्यस्य मेयमातृ मिश्ररूपतया तदुभय सिद्ध यनन्तरं सिद्धिरांपन्नेति तृतीय स्वयं कृते स्वपदौचित्यं कथं मध्यमरूप द्वितीय पदौचित्यमित्याशङ्कां परिहरति मानमित्यादि। मानं प्रमाणं तृतीयपदभागपि वाह्यतस्तु मध्यविश्रान्तिपदे निराग्रह रूपेण सिद्धस्वरूपयोर्मेयमात्रोर्बाह्यतयाऽन्योन्य व्याप्ति स्वभावतया तत्स्वभाव परिग्रह सन्नाहरूपप्रमाणस्य द्वितीयकक्ष्यारोहित्वम् एतदुक्तं भवति। विश्रान्तावन्तर मुखयोर्मेयमात्रोरन्योन्य व्याप्त्याग्रहानुदयात् स्वास्थ्यमेवोभयव्याप्तिपदत्वादुभयात्मनः प्रमाणस्य वाह्यस्य तयोराग्रहोदये नाभिमुख्यं भजतोर्मध्ये प्रमाणपदाविर्भाव इति वेदितव्यम्। अतस्तृतीयपदत्वं बहिर्मध्य कक्ष्यारोहेण द्वितीयपदत्वं प्रमाणस्येति निष्कर्षः अक्षरार्थस्तुमानं तृतीयपदभागपि वाह्यतस्त्विति वाह्ये विशेष कथनादिदमन्तरेऽपि गम्यते। वाह्यतस्तुमध्यम्। अत्रोपपत्तिमाह। इदं प्रमाणं मेयमात्रोः विमिश्रणं अन्योन्य भावग्रहणमार्गत्वात्। सन्निपात पदं व्यामिश्रणपदस्य मध्यत्तोपपत्तिमाह। निखिलस्यवस्तुनोऽहोरात्रादेर्मिश्रं सन्ध्यारूपं पदं मध्यम पदे दृष्टं तस्य धाम्नः पदस्य द्वैरूप्यं द्विस्वभावत्वं शक्ति शिवात्मकतया स्त्रीपुमात्मक मेयमातृ संकरतया नपुंसकता चेतिवेदितव्यमिति शेषः।

## भाषा टीका

स्पर्श वर्ग द्वारा अभिव्यञ्जित जाग्रत् दशा को प्रमाण पद कहा है अतः यह सूर्य का रूप है। प्रमाण पद मातृ एवं मेय पदों का मिश्रण है, अतः मेय एवं मातृ पदों की सिद्धि के अनन्तर प्रमाण पद की सिद्धि सम्पन्न होती है। इस प्रकार जाग्रत् का जीव दशा में भी तृतीय पद के रूप में औचित्य स्वयं सिद्ध है। अतः पूर्व निर्वचन के विपरीत जाग्रत् को यहाँ मध्य-पद

निरूपित करना शङ्कास्पद हो जाता है। इसका निराकरण इस सूत्र में किया गया है।

सूत्रकार निरूपित करते हैं कि यद्यपि प्रमाण तृतीय पद का भागी है तथापि बाह्यतया मेय एवं मातृ पदों का विमिश्रण होने से यह मध्यम पद है। समस्त वस्तुओं का विमिश्रण मध्यम पद में ही देखा जाता है अतः यह मध्यम पद है एवं द्वैरूप्य अर्थात् द्विस्वभावात्मक है इस कारण से इसमें नपुंसकता का निरूपण है।

यद्यपि प्रमाण तृतीय पद के रूप में स्वीकृत किये जाने योग्य है तथापि मध्य विश्रान्ति पद में (स्वप्न-मध्य) मेय एवं मातृ पदों का जो निराग्रह रूप से सिद्ध स्वरूप है वाह्यतया वह अपने अन्योन्य व्याप्ति आत्मक स्वभाव को ग्रहण कर लेता है, अतएव प्रमाण पद का स्वरूप भी अः अर्थात विसर्गात्मक हो जाता है जिसके कारण तृतीय पद के रूप में निरूपित प्रमाण पद का द्वितीय कक्षा में आरोहण हो जाता है। इसका तात्पर्य है कि विश्रान्ति पद के अन्तर्गत अन्तर्मुख मेय एवं मातृ पदों की अन्योन्य व्याप्ति का उदय नहीं होता है क्योंकि उभय व्याप्ति पदों का अन्तः में विलय हो जाता है। वाह्यतः जब मातृ एवं मेय पद अन्योन्य व्याप्ति-ग्रह के लिए अभिमुख होते हैं तब उभय पदों की व्याप्ति के मध्य उभयात्मक प्रमाण पद का आविर्भाव होता है। निष्कर्ष के रूप में लिखते हैं कि बाह्यतः मध्य कक्षा में आरोहण के कारण तृतीय पद स्थित प्रमाण द्वितीय पद ग्रहण करता है।

सूत्र में प्रयुक्त अक्षरों के अर्थ से भी यही स्पष्ट होता है। बाह्यतस्तु शब्द के प्रयोग विशेष से अभिप्राय है कि प्रमाण को अन्तः कक्षा में तृतीय पद के रूप में तथा बाह्य कक्षा में मध्यम पद के रूप में निरूपित किया है।

मेय – मात्र का विमिश्रण प्रमाण पद है। इस पद में मेय मातृभाव का तथा माता मेय भाव का ग्रहण करते हैं, अतः यह अन्योन्य भाव ग्रहण मार्ग होने के कारण सन्निपात पद है।

सिद्धान्ततः मिश्रपद मध्यम पद होता है जैसा कि समस्त वास्तु जगत में देखा जाता है। उदाहरण के लिए अहोरात्र का मिश्र रूप सन्ध्या है जो दिन एवं रात्रि का मध्य पद है। अतएव प्रमाता एवं प्रमेय के मिश्रित रूप प्रमाण पद को मध्यम पद निरूपित करना उचित है। मातृ-मेयात्मक इस मध्यम प्रमाण पद के दो रूप हैं अर्थात यह द्विस्वभावात्मक है। अतः प्रमेय

चित् एवम् चैत्य के मेलन से धर्मी के स्वरूप की सिद्धि होती है। जब धर्मी का इदंताप्रधान विमर्श से संसर्ग होता है तब यह व्यापक चैत्य रूप धर्मी है, अहंता प्रधान विमर्श के संसर्गवश धर्मी का व्यापक चित् रूप होता है तथा अहंता-इदंता के साम्य से स्तिमित विमर्श की संगति (वश) धर्मी चिच्चैत्ये का सामरस्य रूप कहा जाता है।

## षष्ठं सूत्रम्

विश्रान्ति धामनि निजाश्रययोर्विमर्श<br>
श्चिच्चैत्ययोर्भवपदे स्वयमाश्रयोऽपि।<br>
एतद्वयं निजसमाश्रयमेव कुर्वन्<br>
स्वैरक्रमेण विलसत्यबहिर्बहिश्च।।६।।

### व्याख्या

**अथ सूत्रत्रयेण परमशिव भट्टारक स्वातन्त्र्य शक्तेर्विमर्शस्य निराधार विलसन चमत्कारान् प्रदर्शयति। विश्रान्तीत्यादि। विमर्शः कर्ता विश्रान्ति धामनि बिश्रामपदेसुषुप्तावित्यर्थः। निजाश्रययोः चिच्चैत्वयोर्विश्रान्तेः निःशब्दतया विमर्शश्चिच्चैत्ययोराश्रितो लीन इत्युपपन्नम्। भव पदे संसारपदे स्वयमाश्रयो भवपदस्य विकल्पमूलत्वाद्विकल्पस्य विमर्शत्वात्तत्र पदे प्रमात्रादिकः सर्वोप्यर्थो विमर्शमूल एवेति चिच्चैत्योः प्रमात्रोरपि विमर्शाश्रितत्वम्। तथा धर्मिणोरप्याश्रयो विमर्श एतद्वयं चिच्चैत्यरूपं धर्मिद्वयं निजसमाश्रयमेव स्वमाश्रयमेव कुर्वन् अबहिः अन्तः सीमायां बहिश्च बहिः सीमायाञ्च स्वैरक्रमेण बाह्यादभ्यन्तरं वा अभ्यन्तराएद्वाह्यंवेति एवमादिभिः स्वरस प्रबहणक्रमैर्विलसति।।६।।**

## भाषा टीका

अब तीन सूत्रों में परम शिव भट्टारक की विमर्श नामक स्वातन्त्र्य शक्ति के निराधार विलास अर्थात् चमत्कार का निरूपण किया जाता है।

विमर्श, सुषुप्ति नामक विश्रान्ति पद में, निःशब्द होने के कारण चित्-चैत्य में आश्रित अर्थात् लीन हो जाता है। जब विमर्श का संसार के रूप में प्रवर्तन होता है तब चित् चैत्य का आश्रय विमर्श होता है। इसका कारण

यह है कि संसार पद का मूल विकल्प तथा विकल्प का मूल विमर्श है अतएव संसार पद में प्रमाता आदिक समस्त अर्थों का मूल विमर्श ही है। अतएव चित् चैत्य रूप प्रमाता द्वय का आश्रय विमर्श ही सिद्ध होता है।

इस प्रकार चित् एवं चैत्य रूपी धर्मी द्वय को स्वयं के अन्तः में आश्रित कर विमर्श अन्तः एवं वहिः सीमा में विलास करता है। अर्थात् विमर्श, चित्-चैत्य रूपी धर्मी द्वय का आश्रय बन कर स्वैर क्रम से बाह्य से अभ्यन्तर में तथा अभ्यन्तर से बाह्य जगत् के रूप में स्वच्छन्दता पूर्वक (स्वरस) प्रवाहित होता हैं।

## सप्तमं सूत्रम्

स्वप्नेस्फुरत्यबहिरिन्द्रियमूर्तिरन्त-
र्बाह्ये बहिः करणमूर्तिरथप्रबोधे।
संकोचमाश्रयति पूर्वपदेऽत्र
किञ्चिदत्यर्थमुत्तरपदे तु तमादधाति।।७।।

### व्याख्या

**स्वप्नेत्यादि स्वप्ने अबहिरिन्द्रियमूर्तिर्मनोबुद्धिस्वरूपाः, अन्तरम्यन्तर कक्ष्यायां स्फुरति। जगद्रूपं स्वविलासं दर्शयतीति भावः। स्वप्नशब्दः प्रकृतिसंसारस्याप्युप-लक्षकस्तत्रापि मनोबुद्धिरूपेण विमर्शस्य जगदुद्वमनात्। अथानन्तरं प्रबोधे सुषुप्ति-निवृत्याशुद्धजागद्रूपे प्रबोध बहिः करणमूर्तिः श्रोत्रादि बागादि ज्ञानक्रियेन्द्रिय स्वरूपः। बाह्य बाह्यकक्ष्यायां स्फुरतीति सम्बन्धः। अत्र स्वप्नजाग्रदूपपदद्वये यत्पूर्वपदं स्वप्न स्तत्र किञ्चित्सङ्कोचमाश्रयति। सुषुप्तौ विश्रान्त्यैकरस्येन पूर्णस्य विमर्शस्य तदन्तरपदे स्वप्ने ईषत्संकोचस्तद्वशात् प्रमातृप्रमेयरोरपि तथात्वम्। तमेव जाग्रत्संकोचमाह उत्तरपदेत्विति। उत्तरपदे स्वप्नान्तरपदे जाग्रति अत्यर्थमतिमात्रम् तं सङ्कोचमादधाति अङ्गीकरोति।।७।।**

## भाषा टीका

### व्याख्या

स्वप्न दशा में विमर्श अबहिर-इन्द्रिय अर्थात् मन बुद्धि के रूप में अभ्यन्तर

कक्षा के अन्तर्गत स्फुरित होता है। इसका अर्थ है कि स्वप्न दशा में विमर्श अपने जगद्रूप विलास को अभ्यन्तर में प्रदर्शित करता है। स्वप्न शब्द प्रकृति संसार का भी उपलक्षक है अतएव प्रकृति संसार अवस्था में भी विमर्श से मन एवं बुद्धि के रूप में जगत् का स्फुरण होता है। इसके अनन्तर सुषुप्ति से निवृत्ति होने पर शुद्ध जाग्रत् रूप प्रबोध अवस्था में बहिः करण की मूर्ति श्रोत्र आदि ज्ञानेन्द्रियों एवं वाक् आदि क्रिया इन्द्रियों के रूप में विमर्श का बाह्य कक्षा में स्फुरण होता है।

यहां स्वप्न पद में विमर्श का किञ्चित सङ्कोच होता है। सुषुप्ति रूप विश्रान्ति में एक रस होने के कारण पूर्णत्व को प्राप्त विमर्श का स्वप्न पद में सङ्कोच हो जाता है। इस कारण, इस अवस्था में स्वप्नात्मक प्रमाता एवं प्रमेय का रूप भी सङ्कोचमय हो जाता है। उत्तर पद अर्थात् जाग्रत् अवस्था में विमर्श का यह ईषत्-सङ्कोचमय रूप पूर्ण सङ्कोच के रूप में परिणत हो जाता है। अर्थात् स्वप्न में ईषत् सङ्कुचित् विमर्श जाग्रत् अवस्था में पूर्ण सङ्कोच को प्राप्त होता है।

## अष्टमं सूत्रम्

**संकोचवर्तिपरसीमनि वाह्यरङ्गे**
**व्याप्तिं समर्पयति नान्तर धाम्नि पूर्णे।**
**विश्रान्तिमर्पयति पूर्णतरामितोऽपि**
**मायाचमत्कृतिमवाप्य जडो विमर्शः।।८।।**

## व्याख्या

**पशोः संसारपदे विमर्शस्य माया चमत्कार परिग्रहेण विपरीत प्रतीति रूपेण विलसनं दर्शयति। सङ्कोचेति। सङ्कोचवर्ति परसीमनि संकोचभाव परमपदे बाह्यरङ्गे जाग्रत्पदे व्याप्तिं समर्पयति पूर्णतामारोपयति। घटपटादीनां प्रस्फुटं साक्षात्करणेन जाग्रत्प्रकाश एव पूर्णेत्यनुसंधत्ते। पूर्णे जाग्रदयेक्षया पूर्णे सङ्कोचस्येषन्मात्रत्वात् आन्तर धाम्नि आन्तर कक्षायां स्वप्न इत्यर्थः। अत्र व्याप्तिं पूर्णतां न समर्पयति स्वप्नप्रकाशस्य जाग्रत्प्रकाशादल्पत्वमनु संधत्ते। साक्षात्कृतानामपि घटपटादीनां जाग्रदुदये अन्तर्धानात् स्वप्न प्रकाशस्य निष्प्रकाशसुषुप्तिकल्पत्वमेवेति प्रतिपद्यत इत्यर्थः। इतोऽपि स्वप्नात्पूर्णतरामतिपूर्णाम् विश्रान्तिसुषुप्तिमितीऽपि**

**स्वप्नादल्पमिति सङ्कोचपदं प्रतिपद्यते। कस्यचिदपिघटपटार्दिप्रतिपत्तेरिति भावः। एवं विमर्शस्यविपरीतप्रति भाने निमित्तमाह-मायेत्यादि। मायाचमत्कृतिमवाप्य जड सन् विमर्श एव विपरीत रूपोभवतीव्वर्थः। न क्वचिन् मायाविद्या नाम तत्वम्। विमर्शएवेदन्तौल्वण्येन संभाषमानामायेत्युच्यते स एवाहन्तौल्वण्येन भासमानोविद्येति व्यपदिश्यत इति वेदितव्यम्।।८।।**

## भाषा टीका

### सूत्रसार -

सङ्कोच की चरम सीमा जाग्रत अवस्था में विमर्श पूर्णत्व को प्राप्त करता है। अन्तर्धाम स्वप्न पद में विमर्श को यह पूर्णत्व प्राप्त नहीं है। माया के चमत्कार के कारण जाग्रत् अवस्था में प्रस्फुटित विमर्श सुषुप्ति में पूर्ण विश्रान्तिमय है।

## व्याख्या

इस सूत्र में जीव की संसार दशा के अन्तर्गत माया के चमत्कार के परिग्रहण के कारण विपरीत प्रतीति के रूप में विमर्श का विलास दर्शाया गया है।

सङ्कोच भाव की चरम सीमा जाग्रत अवस्था में विमर्श व्याप्ति अर्थात् पूर्णता को प्राप्त होता है। इस अवस्था में घट-पट आदि बाह्य जगत का प्रस्फुट साक्षात्कार होने के कारण जाग्रत् के अंतर्गत अवस्थित प्रकाश को पूर्ण कहा है। अंतर्धाम अर्थात् स्वप्न अवस्था में विमर्श व्याप्ति अर्थात् पूर्णता को प्राप्त नहीं करता है इस कारण जाग्रत की अपेक्षा स्वप्न में प्रकाश की न्यूनता सिद्ध होती है। जाग्रत् अवस्था का उदय होने पर स्वप्न के अंतर्गत साक्षात् रूप में प्रस्फुटित घट पट आदि अंतर्धान हो जाते हैं। सुषुप्ति की भाँति स्वप्न-प्रकाश की भी निष्प्रकाश कोटि में गणना की जाती है।

विमर्श स्वप्न की अपेक्षा सुषुप्ति में भी पूर्णतर विश्रान्ति को प्राप्त होता है। अर्थात् सुषुप्ति अवस्था में स्वप्न की अपेक्षा विमर्श का अधिक संकोच नहीं होता है। अतएव स्वप्न में प्रकटित घट पट आदि की प्रतीति न होने से सुषुप्ति में विश्रान्ति का पूर्णत्व होता है। तात्पर्य यह कि स्वप्न पद की अपेक्षा जाग्रत में विमर्श के सङ्कोच का पूर्णत्व है जो जड़ विमर्श के बाह्य कक्षा में क्रिया की पूर्णता को प्राप्त करता है। अन्तः सुषुप्ति अवस्था में वही विमर्श विश्रान्ति रूप पूर्णता को समर्पित करता है। जाग्रत एवं सुषुप्ति दो अवस्थाओं के अन्तर्गत विमर्श की इस विपरीत

प्रतीति का कारण माया अथवा विद्या नामक कोई पृथक् तत्त्व नहीं है अपितु जब विमर्श में इदंता का प्राधान्य होता है तब इसको माया नाम से व्यवहृत किया जाता है एवं जब अहंता का प्राधान्य होता है; तब विमर्श को विद्या के नाम से सम्बोधित किया जाता है।

## नवमं सूत्रम्

इच्छाद्वयान्तरित मानयुगे यवर्गे
स्वाप्ने जडाखलुदशा समवेक्षणीया।
मातृत्वमत्रमनसो हि लकारमूर्तेः
स्वप्नो हि मानसिक संसरणं प्रसिद्धं।।९।।

## व्याख्या

**इदानीमिच्छामात्रसंसारस्य सुषुप्तेरनन्तरं ज्ञानक्रिया संसारयोः स्वप्नजाग्रतोर्मध्ये विसर्गप्रकरणत्वात् क्रियाप्राधान्येन यद्यपि जाग्रतः प्रथमविवेकौचित्यं तथास्योत्पत्ति क्रियासृष्ट्या ज्ञानस्य प्रथमत्वात् ज्ञान संसारस्य स्वप्नस्य प्रथमं विवेकमाचरमाण ईषत्सङ्कोचरूपां स्वप्नदशामीषत्संकोचवतियवर्गे निरूपयति इच्छेति। इच्छाद्वयान्तरित मानयुगे स्वरपदप्रक्रियानुसारेण इकारोकारसङ्कोच रूपयोः इकारवकारयोः जडाजडेच्छात्वम्। तेन इच्छाद्वयेन अन्तरितं मध्ये कृतं मानयुगम्। ऋकार लृकार सङ्कोचरूप रेफ लकरात्मकं क्रियाज्ञानरूपं प्रमाणयुगं यत्र तस्मिन् यवर्गे जडास्वप्नेदशा जीव सम्बन्धिनी भेद स्वप्नदशा समवेक्षणीया खलु यवर्ग स्वप्न दशयोरीषत्सङ्कोच रूपयोः सादृश्ययोगादिति भावः। अत्र स्वप्ने लकारमूर्तेर्मनस एव प्रमातृत्वम्। लकारः खलु ज्ञान प्रमाणस्थानीयः। अन्तः करण संसारे स्वप्ने ज्ञान रूपं प्रमाणम् मन एव नतु श्रोत्रादयो नतु स्वतन्त्राणीन्द्रियाण्येव निजनिजेषु विपयेषु प्रवर्त्तन्त इत्यनुभवः। मनसः किं स्वरूपं वेत्यत आह। श्रोत्रादीनां वहीरूपमान्तररूपं यथा (दा) श्रोत्रादयो बहिर्निमीलिता अन्तः प्रवर्त्तन्ते तथा (दा) श्रोत्रादीनामेव तथान्तरं रूपं मन इत्युच्यते। यदा बहिरुन्मीलिताः प्रवर्त्तन्ते तदानीं श्रोत्रादि व्यवहारति विज्ञेयम्। अन्तः श्रोत्रादीनामन्तः पदे मन इति व्यवहारात्। ज्ञानेन्द्रियस्थानीयो लकारो मन एव एवं कर्मेन्द्रियस्थानीयो रेफो बुद्धिः कर्मेन्द्रियाणामभ्यान्तररूपं बुद्धिरित्यवगन्तव्यम्। स्वप्ने मनस एव प्रमात्रादि त्रिपुटीभाव परिग्रह चमत्कारेण**

संसरणं न तु तात्विक देह रूपस्य प्रमातृः तथात्वे स्वप्नानुभूतानामर्थानां जाग्रति सम्पात प्रसक्तेः। अतो मनस एव महाशक्तेर्विमर्शस्य त्रिपुटीरूपेण स्वप्ने विलसनं तस्यैव मनसो बहिरपि श्रोत्रादि रूपस्य विषयाकारेण विलसनमिति जगतो न कुत्रापि बहिरन्तर वा विमर्शांदन्यतः परमाण्वादे सिद्धिरिति गुरुकटाक्ष-निरस्तमायान्धकाराणां सम्प्रतिपन्नम्। स्वप्न संसारस्य तात्विक देह प्रमातृ कर्तृत्वे जाग्रति तत्संपादौचित्यात् तत्संपादस्यादर्शनात् स्वप्नो मनो विलास इति लौकिकस्यापि सम्प्रतिपन्नमिति तदपेक्षया स्वप्न निर्विवादं मनस एव प्रमातृत्वमिति तथोक्तम्। तामेव लौकिक सम्प्रतिपत्तिमुद्घाटयति स्वप्नोहीति।।९।।

## भाषा टीका

### सूत्रसार -

य वर्ग के अंतर्गत इच्छाद्वय के मध्य में प्रमाण युगल की स्थिति है। अतएव य वर्ग द्वारा अवबोधित स्वप्न अवस्था जडात्मिका निरूपित की गई है। इस अवस्था में लकार मूर्ति मन प्रमाता है। अतः स्वप्नावस्था मानसिक संसरण के रूप में प्रसिद्ध है।

### व्याख्या

इच्छा-मात्र के संसरण की अवस्था सुषुप्ति के अनन्तर एवं ज्ञान-क्रियात्मक स्वप्न-जाग्रत् अवस्थाओं से पूर्व अर्थात् सुषुप्ति एवं स्वप्न-जाग्रत् अवस्थाओं के मध्य में विसर्ग की स्थिति है। विसर्ग नाम क्रिया का है, जाग्रत् में क्रिया की प्रधानता है अतएव यद्यपि जाग्रत् की स्थिति स्वप्न से पूर्व स्वीकार करने में औचित्य है तथापि उत्पत्ति क्रम में ज्ञान की प्राथमिकता कही गई है क्योंकि सुषुप्ति में प्रथम स्वप्न के अन्तर्गत ज्ञान का आविर्भाव होता है तथा क्रियात्मक जाग्रत् का तत्पश्चात् उदय होता है। इस कारण ईषत्-संकोच रूपा स्वप्न दशा का निरूपण ईषत्-संकोचवती य वर्ग के अन्तर्गत किया जाता है।

स्वर वर्ग की प्रक्रिया के अनुसार इकार जड इच्छा का तथा उकार अजड इच्छा का अवबोधक है। इकार का संकोच यकार तथा उकार का संकोच व कार में हो जाता है अतएव संकुचित रूप में यकार जड इच्छा का एवं वकार अजड इच्छा का रूप है। ऋकार एवं लृकार का संकुचित रूप रेफ एवं लकार है। जिनको य वर्ग में यकार एवं वकार के मध्य में दर्शाया गया है। इसका तात्पर्य है कि यकार एवं वकार द्वारा अवबोधित जड एवं अजड इच्छा के

मध्य में ऋकार एवं लृकार के संकोच रूप रेफ एवं लकार द्वारा अवबोधित ज्ञान-क्रिया की स्थिति है। य वर्ग में वर्णों का क्रम य र ल व है ज्ञान-क्रिया के द्योतक र ल वर्णों की स्थिति य एवं व के मध्य है अर्थात् जड एवं अजड प्रमाता की इच्छाओं के मध्य ज्ञान-क्रिया की स्थिति है। य वर्ग एवं स्वप्न उभय का रूप ईषत् संकोच से युक्त है अतः ईषत् संकोच के सादृश्य के कारण य वर्ग को स्वप्न दशा कहा गया है।

स्वप्न अवस्था में लकार का मूर्त स्वरूप मन प्रमाता होता है। लकार ज्ञान-प्रमाण का स्थान है। अन्तःकरण के रूप में संसृत स्वप्न अवस्था के अंतर्गत ज्ञान रूप प्रमाण पद मन ही है न कि श्रोत्र आदि इन्द्रियाँ। कारण यह है कि मन के अभाव में इन्द्रियों का अपने-अपने विषयों में प्रवर्तन नहीं होता है। यह अनुभव से सिद्ध है।

अब मन के स्वरूप का निरूपण करते हैं। श्रोत्र आदि इन्द्रियों के बहिः एवं अन्तः दो रूप हैं अर्थात इन इन्द्रियों का बाह्य एवं आन्तर दो रूपों में प्रवर्तन होता है। श्रोत्र आदि इन्द्रियों का जब अन्तः में प्रवर्तन होता है तब इनके आन्तर रूप को मन के नाम से व्यवहृत किया जाता है तथा जब बाह्य कक्षा में उन्मीलित होकर इन्द्रियों का बाह्य प्रवर्तन होता है तब इनका श्रोत्र आदि के नाम से व्यवहार होता है।

लकार, जिसका ज्ञानेन्द्रियों के स्थान के रूप में प्रतिपादन किया गया है वह मन ही है। इसी प्रकार कर्मेन्द्रियों के स्थान के रूप में प्रतिपादित रेफ बुद्धि है अर्थात् कर्मेन्द्रियों का आन्तर रूप बुद्धि है।

स्वप्नावस्था में प्रमाता-प्रमाण प्रमेयात्मक त्रिपुटी के परिग्रहण का जो चमत्कार होता है वह मन का संसरण है अर्थात् केवल मानसिक है तथा स्वप्न में उक्त प्रकार से अनुभूत अर्थों का जाग्रत अवस्था में तात्त्विक देहात्मक प्रभाता द्वारा अनुभव नहीं होता है। अतएव स्वप्न के अन्तर्गत विमर्श-शक्ति का त्रिपुटी के रूप में जो विलास होता है वह केवल मानसिक है अर्थात् मन के अन्तर्गत ही है। बाहिर भी श्रोत्र आदि इन्द्रियों के विषयों के आकार में वही मन विलास करता है। इस प्रकार विमर्श से पृथक् परमाणु आदि अन्य किसी तत्त्व से, जगत् की आन्तर अथवा बाह्य स्थिति सिद्ध नहीं होती है। अतः बाह्य एवं अन्तः उभय संसरणों का कारण विमर्श ही है। जिनके हृदय का माया रूपी अन्धकार गुरु के कटाक्ष से निरस्त हो गया है उन महापुरुषों के अनुभव से यह सिद्धांत सम्प्रतिपन्न है।

स्वप्नात्मक संसरण में जिस अनुभूति का सम्पादन होता है तात्त्विक देहात्मक प्रमाता द्वारा अनुभूत जाग्रत् अवस्था में भी उसका संपादन उचित कहा जा सकता है

किन्तु इस प्रकार स्वप्न अनुभूति जाग्रत् में दृष्टिगत नहीं होती है अतः स्वप्न मनोविलास मात्र है ऐसा लौकिक अनुभव से भी सिद्ध है। परिणामतः स्वप्न अवस्था में निर्विवाद रूप से मन का ही प्रमातृत्व सिद्ध है।

# दशमं सूत्रम्

स्वस्यैव शक्तिरवमर्शमयी स्वगर्भे
ग्रस्तस्तयैव मनसावपुरादिमूर्त्त्या।
आत्मा स्वरश्मिपटलस्थगितोऽर्यमेव
नाभाति किञ्चिदपि कञ्चुकपञ्चकान्तः।।१०।।

## व्याख्या

इदानीं चित्तत्वस्यात्मनः स्वान्तःस्थयैव विमर्श पर्यायया मनः शक्त्या देहाद्यन्तः प्रपञ्च पृथिव्यादि वाह्य प्रपञ्च रूपिण्या संवरणचमत्कारं व्युत्पादयति स्वस्यैवेत्यादि। अवमर्शमयी विमर्श रूपिणी शक्तिः स्वस्यैव स्वसम्बन्धिन्येव अस्या स्थितिरपि स्वगर्भेधर्मत्वात् मनसा मनो रूपिण्या तयैव वपुरादिमूर्त्त्या देहपृथिव्यादि प्रपञ्चभूमिका परिग्राहिण्या ग्रस्तः व्याप्तः। अनेन प्रपञ्चेन अहं कवलित इति विमर्शस्यैव विपरीतप्रतीति चमत्कार भावाद् ग्रसन् चमत्क्रिया विषयः नतु परमार्थतो ग्रस्तः। विद्योदयादनन्तरं स्वरूपपर्यालोचनायांस्वस्य प्रपञ्चेन कवलनं विमर्श चमत्कारमात्रे पर्यवस्यतीति स्वधर्म विलासस्तेन कथं स्वस्यावरणमित्येतदुपमामुखेन समर्थयति स्वरश्मीति। स्वरश्मि पटलेन स्थगितः छन्न अर्यमा सूर्य इव कञ्चुक पञ्चकस्य मनः शक्ति समुन्मिषित परिच्छिन्नसंकल्प रूप वेद्यादि पञ्चाङ्ग पदात्मनः। अतः व्याप्य कक्ष्यायां नाभाति न प्रभाति। यथा सूर्यः स्वरश्मिपटलेनैवाच्छादितो न दृग्विषयबिम्बः तथायमप्यात्मा स्वशक्ति विलासेन। अतेव स्वरश्मि चक्ररूपेण प्रपञ्चेन छन्नोन्तर्हित चिदात्मकमूलरूप इत्युपपन्नमितिभावः।।१०।।

## भाषा टीका

**सूत्रसार -**

विमर्शरूपिणी शक्ति अपने अंतः में गर्भित मनोरूप शरीर से स्वयं ग्रस्त है।

अतः जिस प्रकार स्वयं के रश्मि पटल से आच्छादित सूर्य का बिम्ब दृष्टिगत नहीं होता है उसी प्रकार पञ्च कञ्चुक से आच्छादित आत्मा का आभास नहीं होता है।

## व्याख्या

चित् तत्त्व अपने अन्तः में स्थित विमर्श की पर्यायवाची मनोशक्ति के आवरण से आच्छादित है। देह आदि अन्तः प्रपञ्च एवं पृथिवी आदि बाह्य प्रपञ्च मनोशक्ति का स्वरूप हैं, जिससे चित् तत्त्व आवृत्त है। विमर्श द्वारा चित् तत्त्व के संवरण का यह चमत्कार इस सूत्र में प्रतिपादित है।

विमर्श रूपिणी शक्ति के अन्तः में गर्भित होने के कारण मन विमर्श का धर्म है। देह प्रपञ्च एवं पृथ्वी आदि प्रपञ्च अर्थात् अन्तः एवं बाह्य प्रपञ्च विमर्श के मनोरूप धर्म का स्वरूप है, जिस से आत्मा ग्रस्त है। इस प्रपञ्च के कारण अहं भाव का निरास हो जाता है। प्रपञ्च द्वारा चित् तत्त्व को ग्रसन करने की यह चमत्क्रिया विमर्श की विपरीत प्रतीति भाव का चमत्कार मात्र है। वस्तुतः यह ग्रसन पारमार्थिक नहीं है। विद्या के उदय होने पर स्वरूप की पर्यालोचना में, स्वयं के प्रपञ्च के द्वारा चिदात्म तत्त्व का ग्रसन विमर्श शक्ति का चमत्कार मात्र है।

मन विमर्श का ही धर्म है अतः यह प्रश्न उठता है कि अपने ही धर्म से विमर्श स्वयं अपना आवरण किस प्रकार कर सकता है। इस शंका को सूर्य के उदाहरण से सिद्ध करते हैं। जिस प्रकार अपने ही रश्मि पटल से आच्छादित सूर्य का बिम्ब दृष्टिगोचर नहीं होता है उसी प्रकार आत्मा अपनी ही विमर्श शक्ति के विलास से प्रादुर्भूत मनोशक्ति के संकल्प से उन्मिषित पञ्च कञ्चुकों से आच्छादित होकर अवभासित नहीं होता है। अतः अपने ही रश्मि चक्ररूपी प्रपञ्च से आच्छन्न अंतर्हित चिदात्मक तत्त्व ही मूल रूप है एवं विश्व प्रपञ्च विमर्श शक्ति की विपरीत-प्रतीति का चमत्कार मात्र है।

# एकादशं सूत्रम्

आत्मान्वितं वपुरहंकृतिधीमनांसि
त्रीण्यान्तराणि करणानि पदं प्रमातुः।
एतन्मनो विलसितं यदि पञ्चरूपं
माया पदं पदमिदं प्रकृतेस्तु साक्षात्।।११।।

## व्याख्या

अथ विसर्ग व्याप्ति विषयतया सम्भावित पञ्चाङ्गकस्य स्वप्न पदस्य संस्थानमुपदर्शयन् वक्ष्यमाण प्रकृतेः संसारपदादन्य भेदमुपपादयति। आत्म इत्यादि। आत्मान्वितं वपुः आत्मना सह परिगणितं वपुः अहङ्कृति धीमनांसि अहंकार बुद्धिमनो रूपाणि त्रीण्यान्तराणि करणानि। सम्भूय पञ्चाङ्गकं स्वप्नरूपं प्रमातुः पदमित्यस्मिन्नर्थे प्रमातुरात्मन एव स्वाम्यमुक्तम्। अस्य पदस्यात्म शक्ति मनो विलास रूपत्वादात्म विलासरूपत्वमर्थात्सिद्धमिति जाग्रति मानसिक संसाररूपं प्रकृति पदं वक्ष्यमाण प वर्गरूपम्। तत्राप्यात्मा वपुः पर्याय प्रकृतिः, अहङ्काराद्यन्तः करणत्रयमिति पञ्चाङ्ग पदम्। तथा च प्रकृतिपदात् स्वप्नपदस्य को भेद इत्यत्राह। एतदित्यादि। एतत्पञ्चरूपं पदं मनो विलसितं यदि मनस एव तात्विक देहे प्रमातृनिर्व्यपेक्षस्य यदि विलसितं तदानीं स्वप्न पर्यायं माया पदं भवति। साक्षाच्चेदहमेवं स्मरामीति जाग्रत्प्रकृति रूप प्रमातृमूलं चेत्प्रकृतेः पदं भवतीति भावः।।११।।

## भाषा टीका

### सूत्र सार -

प्रमातृ-पद आत्मा, वपु (शरीर) तथा अन्तःकरण रूप अहङ्कार, बुद्धि एवं मन से अन्वित है अर्थात् युक्त है। जब यह पञ्चाङ्गी स्वरूप केवल मन का विलास मात्र होता है तब इसको माया पद के नाम से व्यवहार किया जाता है तथा तब इस पञ्चाङ्गी प्रमाता का प्रत्यक्ष अनुभव होता है तब इसका उल्लेख प्रकृति नाम से होता है।

## व्याख्या

सम्भावित पञ्चाङ्गक स्वप्न पद विसर्ग व्याप्ति का विषय है अतः इस सूत्र में स्वप्न के संस्थान का निर्देश करके आगे निरूपित किये जानेवाले प्रकृति संसार पद से स्वप्न पद का भेद प्रदर्शित किया है।

आत्मा, शरीर, मन, बुद्धि एवं अहङ्कार पांच से मिलकर प्रमाता पद का रूप बनता है। यहां प्रमाता के साथ पद शब्द का प्रयोग करके प्रमाता को आत्मा का स्वामी निर्धारित किया गया है। स्वप्न गत प्रमाता पद में आत्मशक्ति मनोविलास रूप है इस कारण सिद्ध है कि वस्तुतः यह मनोविलास आत्म-विलास ही है।

जाग्रत् दशा में, जैसा कि आगे निरूपित किया जावेगा, मानसिक संसार रूप प्रकृति पद का अवबोधक प वर्ग है। प वर्ग में भी आत्मा, वपु की पर्यायवाची प्रकृति, अहङ्कार, बुद्धि एवं मन सहित प्रमाता पद के पांच अङ्ग हैं, इस कारण प्रकृति पद से स्वप्न पद का भेद निरूपित करना आवश्यक है। अतएव सूत्रकार लिखते हैं कि जब तात्त्विक देह में प्रमाता पद मनोविलास मात्र है तब स्वप्न पद का पर्याय मायापद है तथा जब साक्षात् देह की अनुभूति होती है तब जाग्रत् के अन्तर्गत प्रकृति प्रमातृ पद है।

## द्वादशं सूत्रम्

मायापदे स्वमन एव शरीरताभा-
गित्यादिशन्त्यणुविदोऽत्रवकार गर्भे।
तद्वाह्यतोऽपि च लकारमनुस्मरन्तः
पञ्चाङ्गकम् पदमिदम् चतुरङ्गमेव।।१२।।

### व्याख्या

**नतु स्वप्नपदं विसर्ग व्याप्ति विषयतया पञ्चाङ्गकमित्युक्तम् तत्र यकारादिवकारान्ताश्चत्वारो वर्णाः जडाजडेच्छा प्रमाणद्वयाज्जडेच्छा स्थानीय विसर्ग प्रमातृस्थानं वर्णो न श्रूयते बहिश्च न दृश्यते। तत्कथमस्य पदस्य पञ्चाङ्गत्वमित्यत्राह। मायेत्यादि। अणुविदोमन्त्रविदः मायापदे स्वप्नपदे भेद विमर्शो मायाभेद विमर्शस्य स्वप्न एव प्रथमाभिव्यक्ति स्थलमिति स्वप्न पदे मायापदमिति च व्यवहारः। तत्र पदे मन एव कालरूपः शरीताभाक् देह प्रमातृभावभाक्। मनो व्यतिरेकेण स्वप्नेव्यवहर्त्ता देहोनास्तीति प्राक्प्रतिपादितम्। अतो मनस एव देहत्वमित्यादिशन्ति। कुर्वन्तरत्रवकारगर्भे वकारस्यान्तः लकारान्तर्पद इत्यर्थः। तद्वाह्यतोऽपि च वकारात्पूर्वपदे च लकारमनुस्मरन्तः अनुयोजयन्तः मनस्थानीयस्य वियोजने मन एव देहत्वं प्राप्तमिति प्रतीयते। अतस्तथा योजनेन सम्प्रदाय प्रवर्त्तनमेवोपदेश इति भावः वकारात्पूर्वपदे वाह्यत्वेनाभिमते मनस्थानीयोलकारोऽनुसन्धेयः वकारात्परपदे आन्तरत्वे नाभिमते देहस्थानीयस्य लकारस्य सन्निवेश इति। ननु विसर्ग व्याप्ति पदे विसर्ग प्रमातृरूपस्य देहस्य कथमात्मस्थानीयस्य वकारस्य गर्भे सन्निवेश इत्यत्रोच्यते। स्वप्नपदे विसर्गस्य स्थितिर्बिन्दुगर्भे एव तथापि बिन्दोर्विसर्गेणाव्याप्तिप्रतीतिः। अतएव स्वप्नस्य**

**चिदचिद् व्याप्ति प्रदेशे विसर्ग प्रमातृरूपस्य देहस्य कथमात्मस्थानीयस्य वकारस्य गर्भे सन्निवेश इत्यसङ्केत स्थानतया मिश्राद्वयं वक्ष्यति। जाग्रति तु विसर्ग प्रमातुर्बिन्दुर्बहिर्भाग सन्निवेशः अतेव तस्याशुद्धता वक्ष्यते। देहस्यात्मात्तर्गततत्वेन अन्तः करणत्रयस्यात्मान्तर्गततत्वमनुमेयम्। तद्बहिर्गतत्व सन्निवेशस्तद्व्याप्ति प्रतिपत्त्यपेक्षयो-पपद्यत इति निरवद्यम्। नन्वेतत्पदं पञ्चाङ्गकमुक्तम्। तथाचेच्चतुरङ्गकेण श वर्गकेण सह अष्टकोणे कथं सम संख्यया सन्निवेशमर्हति। अथास्य चतुरङ्गत्वे विसर्ग व्याप्तिर्ने सङ्गच्छत इत्यत्राह। पञ्चाङ्गकमित्यादि। वकारस्य बहिरेव लकार सन्निवेशे चतुरङ्गमेव सत्साम्प्रदायिकेन वकारगर्भे लकार गर्भसन्निवेशरहस्येन पञ्चाङ्गकश्चेति विशेषज्ञैः सम्प्रतिपद्यते इति विज्ञेयम्।।१२।।**

# भाषा टीका

## सूत्र सार -

विसर्ग-व्याप्ति का विषय होने से, गतसूत्र में, स्वप्न-पद को पांच अङ्गों से युक्त प्रतिपादित किया गया है। व्याकरण शास्त्र के अनुसार य वर्ग में य, र, ल, व, ल पांच वर्ण हैं, जिसमें से अन्तिम वर्ण लकार को नव में सूत्र में जड-प्रमाता कहा गया है, किन्तु मन्त्र-शास्त्र में य वर्ग के अन्तर्गत य, र, ल, व केवल चार वर्ण ही स्वीकार किये गये हैं। जिसमें यकार तथा वकार जड एवं अजड की इच्छा के द्योतक हैं तथा रेफ एवं लकार प्रमाण द्वय हैं, इस प्रकार पूर्व में प्रतिपादित कर चुके हैं। अतः यहां जडेच्छास्थानीय विसर्ग-प्रमाता लकार का अस्तित्व न देखा जाता है और न ही सुनाई देता है। अतएव स्वप्न का पञ्चाङ्गत्व शङ्का का विषय बन जाता है।

उपर्युक्त शङ्का के समाधान के लिये दो तर्कों का आश्रय लिया गया है।

मन्त्रशास्त्र के अनुसार भेदात्मक विमर्श के अन्तर्गत स्वप्न ही प्रथम अभिव्यक्ति का स्थल है। अतएव स्वप्न पद को माया के नाम से कहा जाता है। इस पद में मन ही काल-स्वरूप है जो शरीरता अर्थात् प्रमातृ भाव को प्राप्त होता है तथा मन के अतिरिक्त कोई अन्य प्रकार की देह स्वप्नावस्था में व्यवहारकर्त्ता नहीं है। अतः अजडेच्छा के द्योतक वकार के अन्तर्गत ही विसर्ग-प्रमाता पद के द्योतक लकार की स्थिति सिद्ध है अथवा वकार से पूर्व-स्थित लकार को भी प्रमाता के रूप में स्वीकार किया जा सकता है, यह स्थिति भी

सम्प्रदाय के उपदेश के अनुकूल ही है। अर्थात् दोनों ही विकल्पों में स्वप्न में मन की ही शरीर के रूप में स्थिति सिद्ध है। अतः यही निष्कर्ष निकलता है कि यद्यपि मातृका मन्त्र के अनुसार य वर्ग में चार ही वर्ण हैं तथा प्रमाता रूप पञ्चम वर्ण लकार की यहां स्पष्ट स्थिति नहीं है तथापि इसका अनुसन्धान वकार के पूर्व पद के रूप में स्थित लकार में अथवा वकार के गर्भ में ही करना चाहिये।

विसर्ग-व्याप्ति में आत्म-स्थानीय वकार के अन्तर्गत विसर्ग-प्रमाता की स्थिति का स्पष्टीकरण करते हैं। स्वप्न-पद में विन्दु के अन्तर्गत विसर्ग की स्थिति है, तथापि विसर्ग के उत्कर्ष के कारण बिन्दु की अव्याप्ति प्रतीत होती है अर्थात् बिन्दु की व्याप्ति की प्रतीति नहीं होती है। इसी प्रकार स्वप्न की चिदचिद् व्याप्ति दशा में लकार के स्थान का बाहिर सङ्केत न होने से आत्मस्थानीय वकार के अन्तर्गत विसर्ग-प्रमाता की स्थिति शङ्कास्पद हो जाती है, जिसके कारण विपक्ष द्वारा मिश्राद्वैत सिद्धान्त का समर्थन किया जाता है, किन्तु जाग्रत् दशा में विसर्ग-प्रमाता की स्थिति बिन्दु के वाह्य भाग में स्पष्टतः सन्निविष्ट है इसलिये उपर्युक्त मत दोषयुक्त सिद्ध हो जाता है। आत्मा के अन्तर्गत विसर्ग-प्रमाता का सन्निवेश है अतः अन्तःकरणत्रय का अवस्थान भी आत्मा के अन्तर्गत अनुमान करना उचित है। अर्थात् जिस प्रकार स्वप्न दशा में विन्दु के अन्तर्गत विसर्ग की स्थिति है उसी प्रकार आत्म स्थानीय वकार के अन्तर्गत विसर्ग-प्रमाता पद के द्योतक लकार की स्थिति सिद्ध है। किन्तु इस रूप में व्याप्ति-प्रतिपत्त को स्वीकार करने की अपेक्षा लकार के सन्निवेश को बहिर्गत पञ्चम पद के रूप में ही स्वीकार करना अधिक युक्ति युक्त है।

इस प्रकार स्वप्न-पद स्पष्ट रूप से पञ्चाङ्गक दृष्टिगोचर होने लगता है। इस स्थिति में य वर्ग का स्वरूप य, र, ल, व, ल हो जाता है। इसके विरुद्ध विपक्ष द्वारा एक शङ्का और प्रस्तुत की गई है। श्री-चक्र के अन्तर्गत अष्ट-कोण चक्र में चतुवर्णात्मक श वर्ग के समान ही य वर्ग को चार वर्णों से युक्त चित्रित किया गया है। अतएव चतुवर्णात्मक य वर्ग से विसर्ग-व्याप्ति की सङ्गति सिद्ध नहीं होती है, किन्तु स्वप्न को चतुरङ्ग स्वीकार करनेवाले साम्प्रदायिकों ने भी व कार के गर्भ में विसर्ग-प्रमाता रूप लकार के सन्निवेश का उपदेश करके पञ्चम अङ्ग का समर्थन ही किया है अतः विशेषज्ञों ने उसी पञ्चम अङ्ग को स्पष्टतया वकार के वाहिर लकार के रूप में स्वीकार करके स्वप्न को पञ्चाङ्गक प्रतिपादित किया है। अतएव सिद्ध है कि स्वप्न विसर्ग-व्याप्ति का विषय है।

# त्रयोदशं सूत्रम्

पृथिवी लकार इह देहमयी स्वधामा
कर्तृज्ञतेऽस्य मरुदग्निमयौयरेफौ।
व्याप्येतयोः क्षितिजले विकृतेलवौच
स्वात्मस्थितस्य वपुषः करणानि गर्भे।।१३।।

## व्याख्या

उक्त मर्यादया विसर्ग व्याप्याभिमाने पञ्चाङ्गस्य स्वप्न पदस्याङ्गेषु वर्णेषु पशुपदत्वात् पृथिव्यादीनां व्युत्क्रमेण सन्निवेशं दर्शयति। पृथ्वीत्यादि। इह स्वप्न पदे लकारः वकारान्तर्वर्त्ति लकारः स्वधामाऽन्यस्मिन् स्वस्मिन्पदयाकाशस्थानं प्राप्ता देहरूपिणी पृथ्वी अस्य पृथ्वी रूपस्य देहस्य विसर्ग प्रमातुः मरुदग्निमयौ वाय्वग्निरूपौ य रेफौ। कर्तृस्थिते कर्तृज्ञते क्रिया ज्ञान करणे धिद्याप्तिपदे सलिलजडाग्निरूपे यत्तत्वद्वयं तदिदानीं व्युत्क्रमपदे वाय्वग्नि जडाग्निस्थानं यकार रेफ रूपेण उपलक्षितम्। पृथिव्यात्मनो देहप्रमातुः चिद्व्याप्तौ साधनभूतं क्रिया ज्ञान करणद्वयं भवतीति भावः क्रियात्मनो देहस्य प्रमातृत्वात् तत्साधनमपि क्रिया प्रधानं भवतीति विज्ञेयम्। वकारात्पूर्वो लकारः वकारात्परश्च लकारस्तयोर्यकाररेफ रूप वाय्वग्न्योः व्याप्ये विकृते विकृतिमापन्ने प्रकृत्या वाय्वाकाशरूपयोस्तत्त्वयोः क्षितिजलभागौ वकार क्षितिजलौ। एवं स्वात्मस्थितस्य वपुषः आत्मस्थानीय वकारगर्भे स्थितस्य देहस्य विसर्ग प्रमातुः गर्भे करणानि। भवन्तीति शेषः। विसर्गस्य स्वव्याप्तिपदे चित्पदावच्छेदनियमात् आकाशादि रूपस्य विसर्ग पदस्य संस्थानविशेषेणैव चिदनवच्छेदो गम्यते। विसर्ग प्रमातृ साधनाभ्यांवाय्वग्निभ्यांपृथिवीजलयोररुच्छेदो न सिध्यति वायुना जलस्योच्छेदः। अग्निना पृथिव्याः उच्छेदः सम्भवति। वायुना पृथिव्युच्छेदोऽग्निना जलस्योच्छेदो न सम्भाव्यत इति।।१३।।

## भाषा टीका

**संदर्भ -**

विसर्गावस्था में स्वप्न पद के य वर्गात्मक पांच वर्ण हैं, जो स्वप्न के

अङ्ग कहे जाते हैं। य वर्ग के अन्तर्गत य, र, ल, व, ल पांच वर्णों का समावेश सूत्रकार ने निरूपित किया है। इस सूत्र में य वर्ग के अन्तर्गत पृथ्वी आदि तत्त्वों का सन्निवेश विलोम-क्रम से प्रदर्शित किया गया है। अर्थात् अन्तिम लकार प्रमातृत्व के कारण आकाशात्मक पृथ्वी का बोधक, वकार जल का, तृतीय वर्ण लकार क्षिति का, रेफ अग्नि का तथा यकार वायु का अवबोधक है।

## सूत्रसार -

व्याप्य अर्थात् विकृति दशा में आकाश भाव को प्राप्त देहमयी पृथ्वी का द्योतक लकार है, क्रियात्मक वायु का द्योतक यकार एवं ज्ञानात्मक अग्नि का द्योतक रेफ है। क्षिति का द्योतक लकार तथा जल का द्योतक वकार है जो देहात्मक प्रमाता के अन्तः में करण रूप में स्थित हैं।

## व्याख्या

द्वितीय खण्ड के द्वितीय सूत्र में पृथ्वी तथा नभ को मिश्र प्रमाता के रूप में प्रतिपादित किया है। तदनुसार यहां भी लकार द्वारा अवबोधित पृथ्वी को आकाशात्मक निरूपित किया गया है। इस प्रकार स्वप्न दशा में व कारान्तर्वर्ति लकार यकारत्व में परिवर्तित हो जाता है। अर्थात् आकाशत्व को प्राप्त पृथ्वी विसर्गावस्था में प्रमातृत्व ग्रहण करती है एवं विसर्ग-प्रमाता का अभिव्यञ्जन वकार के अन्तः में गर्भित लकार के द्वारा होता है।

पृथ्वी को आकाशात्मक प्रतिपादित करने से सूत्रकार का तात्पर्य है कि जब विसर्ग का प्रवाह चित् की ओर होता है तब आकाशात्मक-पृथ्वी रूप विसर्ग-प्रमाता के वायु तथा अग्नि दो करण हैं। वायु का अवबोधक यकार तथा अग्नि का अवबोधक रेफ है जो क्रमशः क्रिया तथा ज्ञान के द्योतक हैं। अतएव फलस्वरूप क्रियात्मक वायु एवं ज्ञानात्मक अग्नि विसर्ग-प्रमाता के करण हैं। विसर्ग दशा में प्रमाता क्रिया प्रधान होता है अतः इस अवस्था में इसके साधन भी क्रिया प्रधान हैं। (इस कारण य वर्ग में यकार का प्रथम स्थान है।)

व्याप्य दशा में वकार का पूर्व-वर्ती लकार एवं उत्तरवर्ती लकार दोनों ही वायु अग्न्यात्मक यकार एवं रेफ के भाग हैं। वकार का उत्तरवर्ती लकार क्षिति का अवबोधक तथा पूर्ववर्ती लकार जल का अवबोधक है। वायु जल का उच्छेदक तथा अग्नि क्षिति का उच्छेदक है, इस प्रकार क्षिति तथा जल क्रमशः अग्नि तथा वायु के भाग सिद्ध हैं। अतएव क्षिति तथा जल भी विसर्ग-प्रमाता के करण स्वतः सिद्ध हो जाते हैं।

पृथ्वी का लय जल में होता है अतएव पृथ्वी के द्योतक लकार को जल के अवबोधक वकार के अन्त में कल्पित किया गया है। इस कारण यह सिद्ध होता है कि वायु, अग्नि, जल एव क्षिति वकार के अन्तः स्थित लकार द्वारा अवबोधित विसर्ग-प्रमाता के करण हैं।

# चतुर्दशं सूत्रम्

मग्नःपुमान् वपुषि चित्तमहंक्रियायां
बुद्धौ जडांश जठरेऽप्यजडस्तदंशः।
इत्थंप्रमातरि जडांशगताजडांशे
ज्ञानक्रियान्तरवभातिमहानजाण्डः।।१४।।

## व्याख्या

**इदानीमात्मनः स्वगर्भस्थेनैव देहादिना व्याप्तिं निरूपयन्मनोबुद्धिरूपस्य-विमर्शस्य देहाहंकाररूपान्तर्जगदुद्वमनानन्तरं वाह्य जगदुद्वमन चमत्कारंदर्शयति। मग्नइत्यादि। पुमान् आत्मा वकाररूपः वपुषि लकार रूपे मग्नो भवतीतिशेषः। चित्तंपूर्वलकार रूपमन अहंक्रियायायकाररूपे अहंकारेमग्न इत्यन्वयः। बुद्धौ जडांशजठरे अजडस्तडंशः मग्नः इत्यन्वयः। बुद्धेरग्नित्वं जडाजड रूपत्वं च प्रतिपादितम्। ननु वायुनाहंकारेणपृथिविरूपस्यचित्तस्य कवलनम् अग्निरूपया बुद्धया जलरूपस्यात्मन कवलनम्पूर्वसूत्रेणोन्मोलितम्। इदानीमात्मनोदेहेव कवलनम् कथमितिचेदुच्यते। ज्ञानक्रियारूपम्करण्यम् प्रभातुरङ्गमेवतत्कवलनम्-फलतः प्रमातृकवलनभेवेति न विरोधः। इत्युक्तनिमज्जन प्रक्रियया प्रमातविकार रूपे प्रमातरि जडांशगताजडांशेविसर्गतदङ्गनिम्नस्वात्मस्वकोयाङ्गेसतिज्ञानक्रियान्तः मनोबुद्धिगर्भात् मनोबुद्धिरूपविमर्श गर्भादित्यर्थः। महानतिविततः अजाण्डो ब्रह्मांडः अवभातिनिर्गच्छति। विमर्शः स्वगर्भादन्तः प्रपञ्चोन्मीलनानन्तरंवाह्य-प्रपञ्चमुद्वमतीतिभाव। स्वप्नपदे ब्रह्माण्डस्य पिण्डाण्डंकारणमिति लौकिकस्यापि सम्प्रत्ययः। जाग्रति तु ब्रह्माण्डः पिण्डाण्डस्यकारणमिति दक्षिणमार्ग लौकिकप्रतीति।वाममार्गस्ययोगिनस्तुतत्रपिण्डाण्डएवब्रह्माण्डकारणमितिनिश्चयः। सिद्धदशनि। यामले तु तयोरन्योन्य कार्यं कारणत्वं यौगपद्य सिद्धेरितिसत्यात्मनोः पिण्डाण्डब्रह्माण्डयोरविनाभावइति। अन्तः पदेपिण्डाण्डाङ्ग ब्रह्माण्डमिति बहिःपदे ब्रह्माण्डाङ्ग पिण्डाण्डमितिसविवेकः।।१४।।**

# भाषा टीका

## सूत्र सार -

पुरुष का शरीर में, चित्त का अहङ्कार में तथा बुद्धि के जडांश के अन्तर्गत उसके अजडांश का निमज्जन होता है। इस प्रकार प्रमाता के जडांश गत अजडांश में स्थित ज्ञान क्रिया के अन्तः में ब्रह्माण्ड का निस्सरण होता है।

इस सूत्र में स्वगर्भस्थित देहादि के रूप में आत्मा की व्याप्ति, तथा मनोबुद्धि रूप विमर्श का देहाहङ्कार रूप अन्तः जगत् से निस्सरण का निरूपण करने के पश्चात् वाह्य जगत् की सृष्टि के चमत्कार का दिग्दर्शन कराया गया है।

शरीर के अन्तर्गत आत्मा व्याप्त है। इसी सिद्धान्त को वर्णों के अनुसार दर्शाते हैं। वकार रूप आत्मा लकारात्मक देह में निमज्जित हो जाता है। चित्त अर्थात् पूर्ववर्त्ति लकाररूप मन का अहंकार रूप यकार में तथा वृद्धि के जडांश में उसके अजडांश का निमज्जन हो जाता है।

वायु रूप अहङ्कार में पृथ्वी रूप चित्त के निमज्जन का, एवम् अग्नि रूपा बुद्धि में जल रूप आत्मा के निमज्जन का पूर्व सूत्र में वर्णन किया है इस सूत्र में देह के द्वारा आत्मा के निमज्जन का वर्णन किया जाता है।

प्रमाता के दो करण ज्ञान तथा क्रिया हैं जिनका विलय अहंकार एवं बुद्धि में हो जाता है। ज्ञान एवं क्रिया आत्मा के अङ्ग हैं अतः यह अर्थ हुआ कि आत्मा का निमज्जन शरीर में होता है। इस प्रकार यह निमज्जन की प्रक्रिया है। प्रमाता के जडांशगत अजडांश में ज्ञान-क्रिया की स्थिति है। जो मन एवं बुद्धि के अन्तः में निमज्जित है अतः मनोबुद्धि के गर्भ से ही महान ब्रह्माण्ड की उत्पत्ति होती है। मनोबुद्धि रूप विमर्श के गर्भ से पँहिले अन्तः प्रपञ्च का उन्मीलन होता है तत्पश्चात् बाह्य प्रपञ्च का निस्सरण होता है। सूत्रकार का यह तात्पर्य है। अर्थात् स्वप्नपद में ब्रह्माण्ड का कारण पिण्डाण्ड है। यह समान रूप से लोक में सभी का अनुभव है तथा जाग्रत् में पिण्डाण्ड का कारण ब्रह्माण्ड है यह दक्षिणाचार एवं लोक प्रतीति है। वाममार्गी योगी पिण्डाण्ड को ही जाग्रत् तथा स्वप्न दोनों अवस्थाओं में ब्रह्माण्ड का कारण स्वीकार करते हैं। तीसरा यामल मार्ग है जिसके अनुसार जाग्रत एवं स्वप्न दोनों में युगपत् कार्य-कारण सम्बन्ध है। अर्थात् पिण्डाण्ड तथा ब्रह्माण्ड में अविनाभाव सम्बन्ध है। आन्तरिक

अनुभूति में पिण्डाण्ड का अङ्ग ब्रह्माण्ड है तथा बाह्य अनुभूति में पिण्डाण्ड ब्रह्माण्ड का अङ्ग है। इस प्रकार यह सम विवेक है।

## पञ्चदशं सूत्रम्

**पिण्डाण्डमूलमपि मूलमिवास्य भाति**
**ब्रह्माण्डमन्तरमपि वाह्यमिवास्य चित्रम्।**
**मायाविमोहितदृशा तदणुर्निरीक्ष्य**
**स्वाङ्गानि-पञ्चकलयत्यणुसंज्ञकानि।।१५।।**

## व्याख्या

**इदानींपशोः स्वस्वरूपभूतात् पिण्डाण्डादेवोदितस्य ब्रह्माण्डस्यदशनि-नयोऽयंविपरीतप्रतीतरूपविमर्शविलासस्तन्विवृणोतिपिण्डाण्डेति। ब्रह्माण्ड-पिण्डाण्ड-मूलमपि स्वप्नेऽपि देहाभिमानिनः विवादंमनोमूलकत्वात् पिण्डाण्डमूलकमपि अस्यपिण्डाण्डस्य स्वयंमूलमिवभाति। अस्यपिण्डाण्डस्यान्तरे अपि मनोनिष्ठत्वादन्तस्थमपि बाह्यमिव भाति। चित्रमद्युतम्। स्वान्तस्थस्य स्वव्यापकत्वेनप्रतीतेरद्भुतत्वात् अणु संकुचित प्रमाता तत्तदेवं विधं ब्रह्माण्ड माया विमोहितदृशा माया चमत्कारपरिग्रहेणविमोहितया विकृतिगतया दृशा दृग्विमर्शेन निरीक्ष्यपञ्चपिण्डाण्ड स्थानानि देहादीनि स्वाङ्गानि अणुशक्तिकानि ब्रह्माण्डापेक्षया अत्यल्पसाराणिकलयति मनुते।।१५।।**

## भाषा टीका

### सूत्रसार -

स्वप्नावस्था मनोमूलक है अतएव इस अवस्था में ब्रह्माण्ड का कारण पिण्डाण्ड है। अर्थात् स्वप्न में ब्रह्माण्ड की प्रतीति सर्वथा मानसिक है। तथापि देहाभिमानी जीव को स्वप्न में पिण्डाण्ड के अन्तः में अनुभूत ब्रह्माण्ड इस प्रकार प्रतीत होता है जैसे इसकी अनुभूति पिण्डाण्ड के बाहिर हो रही है। यद्यपि ब्रह्माण्ड का कारण पिण्डाण्ड है तथापि प्रतीति इस से विपरीत होती है। अर्थात् पिण्डाण्ड का कारण ब्रह्माण्ड प्रतीत होता है। यह विपरीत प्रतीति अद्भुत है।

अणु अर्थात् संकुचित प्रमाता जीव माया के चमत्कार से विमोहित होने के कारण पिण्डस्थ आत्मान्वित देह अहङ्कार आदि पांच अङ्गों को ब्रह्माण्ड की अपेक्षा अत्यन्त अल्प कल्पित करता है। अतः वृहत् ब्रह्माण्ड यद्यपि पिण्डाण्ड का मूल नही हैं तथापि मूल के समान प्रतीत होता है।

## षोडषं सूत्रम्

सङ्क्लृप्त वायुशिखि भूजलखापकर्षा
बन्धाऽस्युरन्तरणुकस्य कलाप्यविद्या।
रागश्च कालनियती इतिकञ्चुकास्ते
मायात्मनः प्रथमकञ्चुकता सुषुप्तेः।।१६।।

## व्याख्या

इदानीं पशोः पञ्चमहाभूतात्मक ब्रह्माण्डाङ्गदर्शनेन सङ्कुचित भूतात्मक स्वस्वरूप पिण्डाण्डानामपकर्षसंकल्पा एव अन्तर्बन्धाः। कलादि शब्द व्यवह्रियमाणा षट्कञ्चुका भवन्तीत्याह। सङक्लृप्तेति। सङक्लृप्त वायु शिखि भूजलखापकर्षाः सङक्लृप्ताः संकल्पिताः वाय्याद्यपकर्षाः यकाररेफलकार बकारलकारस्थानकवाय्वग्नि-क्षितिजलाकाशसङ्कोचाः अणुकस्य परिच्छिन्न प्रमातुः अन्तर्बन्धाः स्युः। सङ्कल्पानां पशोरन्तर्हृदयेऽबस्थानात् प्रपञ्च व्याप्ति लक्षण बन्धमूलत्वाच्च अन्तर्बन्धत्वम्। स्वसङ्कल्प बशाद्बद्ध इति प्रसिद्धेः। तेषां सङ्कल्प रूप बन्धानां यकार स्थानक वाय्वादि क्रमेण सिद्ध सम्प्रदाय प्रसिद्ध कलादि षट् कञ्चुक रूपतां क्रमेणानुदिशति। कलेत्यादि। यकारस्थानक वायु सङ्कोचः संकल्पः कलानां कञ्चुको भवति। रेफस्थानकाग्निसङ्कोच संकल्पः अविद्यानां कञ्चुकोभवतीति। लकारस्थानक पृथिवीसङ्कोच सङ्कल्पो राग इति कञ्चुकोभवति। वकारस्थानक जलसङ्कोच संकल्पः कालोनाम कञ्चुको भवति। लकारस्थानकाकाश सङ्कोच संकल्पो नियतिर्नाम कञ्चुको भवति। अपरिच्छिन्न प्रमातृ पदे सर्व कर्तृत्वस्य वायोः पशुपदे सङ्कोचात्कलामात्रकर्तृत्वमिति कला। सर्वज्ञत्वस्याग्नेर्विद्यारूपस्यसङ्कोचाद्वैपरीत्ये अविद्यात्वम्। पूर्णत्वशक्तेः पृथिव्याः सङ्कोचे ममेदमाशास्यमितिस्पृहा पर्यायरागोदयाद्रागत्वम्। नित्यत्व शक्तेः सलिलस्य संकोचे अनित्यता कलनात्कालत्वं व्यापकत्व शक्तेराकाशस्य संकोचे अत्रैवाह मितिदेशनियमान्नियतित्वमिति कलादीनामुपपत्तिः। ननुकञ्चुकाः

**षडितिप्रसिद्धिस्तत्र माया प्रथमेति श्रूयते। तस्या कथंनात्रविवेक इत्यत्राह मायात्मन इति। योऽयं पञ्चकञ्चुकरूपात् स्वप्नात्पूर्वभाविनीतत्कारणरूपभूता जड सुषुप्तिः सैव माया भेद संसारस्यमूलरूपत्वात् तस्याः मायात्मनः सुषुप्तेः प्रथम कञ्चुकता क्षकारादि ककारान्त वर्णाः शिवादि क्षित्यन्त षट्त्रिंशत्तत्वरूपाः इति साम्प्रदायिकी प्रसिद्धिः। ते च वर्णाः द्विरूपेण लकारेण सहपञ्चत्रिंशकेन षकारक्षकारयोरेकवर्णत्वेन सम्प्रदाये सम्प्रतिपन्नत्वात्। ततः स्वर वर्गस्य मायातत्वरूपस्यान्तस्थवर्ग मूले सन्निवेशे वर्णेषुषट् त्रिंशत्तत्वस्थितिरविसंवादिनी। स्वरखण्डः खलु व्यापक खण्डस्यभूलम्। यवर्गरूप भेद स्वप्नबीजत्वाच्छ वर्गरूपाभेद स्वप्न विश्रान्तिपदत्वाच्च। उत्पत्यपेक्षया ज्ञानस्यप्राधान्यंप्रतीत्यपेक्षया क्रियायाः प्राधान्यमितिज्ञानक्रिया संसार रूपयोः स्वप्न जाग्रतोर्मध्ये सर्वकारणस्यसुषुप्तेः स्वर वर्ग रूपस्य सन्निवेशइति स्वरवर्गेस्वप्न वासना रूप यकारो मायातत्वस्थानमिति विवेकः ।।१६।।**

# भाषा टीका

जीवावस्था में ब्रह्माण्ड के केवल पञ्चमहाभूतात्मक अङ्गों का दर्शन होने से पिण्डाण्ड का स्वरूप संकुचित हो जाता है जो इसके अपकर्ष का कारण है। तथा इसी संकोच के कारण कला आदि छै कञ्चुक अन्तर्बंध के रूप में प्रकट होते हैं।

## सूत्रसार -

जीव के द्वारा संकल्पित वायु, अग्नि, भू, जल तथा आकाश अणु के अपकर्ष-कारक बन्धन हैं। यह पञ्च महाभूत कला, अविद्या, राग, काल, नियति नाम से व्यवहृत पाँच कञ्चुक हैं। प्रथम कञ्चुक माया है जो सुषुप्ति का अपकर्षक हैं।

# व्याख्या

संकल्पित वायु, अग्नि, पृथ्वी, जल एवं आकाश अणुप्रमाता के अपकर्षक हैं। य वर्ग के य, र, ल, व, ल वर्ण वायु आदि तत्त्वों के अवबोधक होने से परिच्छिन्न प्रमाता जीव के बन्धनकारक हैं।

पञ्च महाभूतों को जीव का अन्तर्बन्ध इस कारण कहा जाता है कि संकल्पों का स्रजन जीव के हृदय में होता है तथा संकल्पात्मक प्रपञ्च की व्याप्ति जीव के वन्धन का मूल है। अर्थात् अपने ही संकल्पो के वश जीव बद्धावस्था को

प्राप्त होता है। इन संकल्पात्मक बन्धों के यकार आदि के द्वारा अवबोधित वायु आदि पञ्च महाभूत क्रम से कलादि रूप षट् कञ्चुक हैं।

यकार स्थानीय वायु का संकोच-संकल्प कला नामक प्रथम कञ्चुक है। लकारात्मक पृथ्वी-संकोच राग, रकारात्मक अग्निसंकोच-संकल्प विद्या, वकार स्थानक जल-संकोच संकल्प काल, लकारात्मक आकाश-संकोच-संकल्प नियति नामक कञ्चुक हैं।

अपरिच्छिन्न प्रमातृ-पद में सर्वकर्तृत्व-वायु का पशु पद में संकोच होने से केवल कलात्मक कर्तृत्व शेष रह जाता है अतः इसे कला नाम से कहा जाता है। विद्या रूपिणी अग्नि की सर्वज्ञता का संकोच होकर इसका अविद्या तत्त्व में परिवर्तन होने से अविद्या नामक कञ्चुक कहा जाता है। पूर्णत्व से युक्त शक्ति रूप पृथ्वी का संकोच होकर 'यह मेरा है' इस प्रकार स्पृहा अर्थात् रोग के उदय होने के कारण यह कञ्चुक राग नाम से कहा जाता है। नित्य शक्ति से युक्त जल का संकोच होने पर अनित्यता का प्रवर्तन होता है अतः इसे काल कंचुक के नाम से कहते हैं। आकाश के व्यापकत्व का संकोच होने पर 'मैं यहां हूं' इस प्रकार की देशात्मक नियम की कल्पना होने से इसको नियति नाम से कहा गया है। यह कलादि कञ्चुकों की उत्पत्ति का विवेक है।

कञ्चुकों की संख्या सूत्र में छै बतलाई गई अतः अब माया नामक छटवें कञ्चुक का विवेचन करते हैं। पञ्च-कञ्चुक-आत्मक स्वप्न से पूर्वोद्भूत कारण रूप जड-सुषुप्ति भेद संसार की भी मूल है इस कारण से क्षकार से ककार पर्यन्त वर्णों के द्वारा अवबोधित शिव से क्षिति पर्यन्त तत्त्वों की स्वरूपभूता माया सुषुप्ति की प्रथम कञ्चुक है। अर्थात् माया के कारण सुषुप्ति का संकोच होता है अतः माया को कञ्चुक कहा है।

वर्ण माला में दो लकारों का सन्निवेश है जिनको सम्मिलित करके भी क से क्ष पर्यन्त केवल पैंतीस अक्षर होते हैं क्योंकि साम्प्रदायिक विद्वान क्षकार को षकार के अन्तर्गत ही मानते हैं अतएव छत्तीसवें वर्ण के रूप में स्वरवर्गात्मक माया-तत्त्व का, य-वर्ग के मूल में, सन्निवेश स्वीकार किया गया है। इस प्रकार छत्तीस तत्त्वों के द्योतक वर्णों की संख्या छत्तीस ही निश्चित होती जाती है।

भेद-स्वप्न का मूल य-वर्ग तथा अभेद-स्वप्न की विश्रान्ति का मूल श-वर्ग होने के कारण व्यापकखण्ड का मूलस्वर खण्ड है।

उत्पत्ति के अपेक्षा ज्ञान का तथा प्रतीति की अपेक्षा क्रिया का प्राधान्य

होता है। अतः ज्ञान एवं क्रियात्मक संसरण के स्वरूपभूत स्वप्न तथा जाग्रत् के मध्य में स्थित सुषुप्ति के अन्तर्गत स्वरवर्ग का सन्निवेश है।

अतएव स्वप्न की वासना के द्योतक इ-कार का स्थान माया तत्त्व के रूप में स्वर-वर्ग के अन्तर्गत नियत है।

# सप्तदशं सूत्रम्

**कर्तत्व शक्तिरनिलः सकलज्ञताग्निर्भूः-**
**पूर्णता विलयताम्बुवियद्विभुत्वम्।**
**पञ्चापि शक्तय इमावितताः स्वरूपम्**
**शम्भोर्भवन्त्यपि च संकुचितापशोऽस्तु।।१७।।**

## व्याख्या

**इदानीं यकारादि स्थानानां वाय्वादीनां पूर्णापूर्णतया जीवशिवस्वरूप कर्तृत्वादि पञ्चशक्तित्वं व्युत्पादयति कर्तृत्वेति। अनिलः शिवस्य सर्व कर्तृत्व शक्तिः अग्निः सर्वज्ञता शक्तिः भूः पूर्णता शक्तिः अम्बु अविलयता नित्यत्व शक्तिः वियदाकाशः विभुत्वं व्यापकत्व शक्तिः इमा पञ्चापि शक्तयः निरताः पूर्णाः शम्भोः स्वरूपं भवन्ति। संकुचितास्तु पशोः स्वरूपं भवन्ति। सर्वस्याः क्रियायाः स्पन्द रूपत्वात् स्पन्दस्य वायु धर्मत्वाद्वायोः कर्तृत्व शक्तिता। ज्ञानस्य भासनरूपत्वात् भासनस्य तेजो धर्मत्वात् वन्हेज्ञान शक्तिता। सम्पन्न तात्पर्यस्य पूर्णत्वस्य सकलभोग्य वस्तु मूलत्वात् सकलभोग्य वस्तूनां पृथिवी मूलत्वात् पृथिव्याः पूर्णत्व शक्तिता। नित्यत्वस्याऽऽप्यायनाविच्छेद मूलत्वादाप्यायनस्य जल धर्मत्वाज्जलस्य नित्यता शक्तित्वम्। विभुत्वस्य व्याप्तिमूलत्वाद्व्याप्तेराकाश धर्मत्वादाकाशस्य विभुत्वशक्तिरिति विवेकः।।१७।।**

# भाषा टीका

## सूत्रसार -

इस सूत्र में निरूपण किया गया है कि यकारादि से अवबोधित वायु आदि पञ्चमहाभूत पूर्णता तथा अपूर्णता के कारण शिव तथा जीव की कर्तृत्व आदि पञ्च-शक्तियों से युक्त हैं।

## व्याख्या

कर्तृत्व-शक्ति अनिल, सर्वज्ञता-शक्ति अग्नि, पूर्णता-शक्ति पृथ्वी, अविलयता-शक्ति अम्बु तथा नित्य-शक्ति आकाश है। पूर्णत्व को प्राप्त यह पाँचों शक्तियाँ शम्भू का स्वरूप हैं तथा संकोचावस्था में अपूर्णता को प्राप्त होकर जीव का स्वरूप हैं।

समस्त क्रिया स्पन्द रूप होने के कारण तथा स्पन्द वायु का धर्म होने के कारण वायु कर्तृत्व-शक्ति है।

ज्ञान प्रकाश रूप है तथा प्रकाश तेज का धर्म है अतः वह्नि में ज्ञान-शक्ति है।

सकल भोग्य-वस्तू पूर्णत्व का मूल है; तथा पृथ्वी सकल भोग्य-वस्तुओं का मूल है; अतएव पृथ्वी पूर्णत्व-शक्ति से सम्पन्न है।

आप्यायन अर्थात् भरण नित्यत्व का मूल है तथा आप्यायन का मूल जल है अतः जल नित्यत्व-शक्ति से युक्त है।

विभुत्व व्याप्ति का मूल है तथा व्याप्ति आकाश का धर्म है अतः आकाशकी विभुत्व-शक्ति है।

# अष्टादशं सूत्रम्

**स्यात्पञ्चशक्तिमयता प्रकृतिः शिवस्य**
**स्वान्तर्जगत् कलनमप्यथदेहिनस्तु।**
**वाह्ये जगत्कलनमेव भवेद्विभेदः**
**स्वाभ्यन्तरस्थ जगतोऽपि विमोहशक्त्या॥१८॥**

## व्याख्या

**शिवयोः पञ्चशक्तिमयत्वे सामान्ये भेदकं धर्ममुत्पादयति स्यादिति। शिवस्य पञ्च शक्तिमयता प्रकृतिः स्वभावः स्यात्। अष्टौमूर्तयः शिवस्येति प्रसिद्धिः तत्र चन्द्रार्कयोस्तेजसि वह्नावन्तर्भावात् यजमानस्य चिदात्मन आकाशे तेजसि वान्तर्भावात् ब्रह्माण्ड रूपेण परिणता पञ्चमहाभूता एव शिवस्य स्वरूपमाकाश**

**प्रभृतिका इत्युपपन्नम्। शिवस्य जीवाद्भेदकं धर्ममाह स्वान्तजर्गत् कलनमिति। महाभूत परिणाम रूपाणां जगतां भूर्भुवादीनां महाभूतेष्वेवावस्थानात् तदात्मनः शिवस्य स्वान्तर्जगत्कलन मेतावती शिवस्य प्रकृतिः। अथ देहिनस्तु अथ पक्षान्तरे पञ्चभूतात्मकत्वात् पञ्च शक्ति मयस्यैव सतः स्वाभ्यन्तरस्य जगतः पिण्डाण्ड रूपस्य जीवस्य। पिण्डाण्डादेव ब्रह्माण्डोदयात् तत्रैव तस्य संस्थानात् स्वाभ्यन्तरस्थ जगतोऽपीत्युपपन्नम्। विमोह शक्त्या विपरीत प्रतीतरूप विमर्शे शक्तयाः बाह्ये व्याप्तिपदे यज्जगत्कलनं जगतामवस्थान सङ्कल्पः तदेव शिवाद्विशेषः। भेदको धर्मः यदा निजस्वरूपं पिण्डाण्डं ब्रह्मांडस्य मूलतया ब्रह्मांडादधिकं मन्यते तदा स्वस्वरूपस्यैव ब्रह्मांडत्वे तदुत्तीर्णत्वेच प्राप्ते सति विश्वमय विश्वोत्तीर्ण स्वभावं शिवत्वमेव शिवस्य प्राप्नोतीति भावः।।१८।।**

## भाषा टीका

### सूत्रसार -

यहाँ जीव तथा शिव में भेदक-धर्म का व्युत्पादन करते हैं।

### व्याख्या

शिव अपने स्वभाव के कारण ही पञ्च-शक्तियों से युक्त हैं तथा शिव के अन्तः में ही जगत् का प्रवर्तन होता है।

देही विमोह शक्ति के कारण स्वान्तस्थ जगत का वाह्य कक्षा में अवलोकन करता है। यह भेद-दृष्टि जीव की विशेषता हैं।

शिव की आठ मूर्तियाँ प्रसिद्ध हैं। जिनमें से चन्द्र तथा सूर्य का अग्नि में, अग्नि का आकाश में लय होता है। शिव का आकाश में अन्तर्भाव होने से ब्रह्माण्ड रूप में परिणत पंच-महाभूत ही शिव का स्वरूप है, यह सिद्ध होता है।

भू. भुवादि के रूप में परिणत जगत का अवस्थान पञ्च महाभूतों के अन्तर्गत होने के कारण यह निष्कर्ष सिद्ध होता है कि जगत का यह कलन अर्थात् संसरण शिव के अन्तर्गत ही होता है। इस प्रकार स्वभाव से ही शिव पञ्च-शक्तियों से युक्त है एवं शिव के ही अन्तः में जगत का कलन होता है।

पञ्च-भूतात्मक होने के कारण पञ्च-शक्तिमय जीव के अन्तः में पिण्डाण्ड की स्थिति है, तथा पिण्डाण्ड की ब्रह्माण्ड की उत्पत्ति तथा स्थिति का स्थान है।

विपरीत-प्रतीति रूप विमर्श शक्ति के कारण जीव स्वान्तस्थ जगत को, वाह्य कक्षा में संकल्पित करता है। शिव से जीव की यह विशेषता है जो भेदक धर्म कही जाती है। अर्थात् ब्रह्माण्ड का मूल होने के कारण पिण्डाण्ड रूप जीव जब अपने स्वरूप को ब्रह्माण्ड से अधिक मानता है तब ब्रह्माण्डत्व तथा उससे भी उत्तीर्ण अवस्था को प्राप्त करता हैं अर्थात् विश्वमय तथा विश्वोत्तीर्ण शिवत्व को प्राप्त होता है।

# उनविंशति सूत्रम्

**अन्तरस्थितस्य मनसो न हि पूर्तियोग-**
**श्चैत्यस्य तत्कवलितत्व विनिश्चयायाः।**
**तद्वच्चितेरपि न पूर्तिरतो दशेयं**
**पक्षद्वये स्फुरदपूर्त्यभिपूर्तियोगः।।१९।।**

## व्याख्या

**इदानीं स्वप्नस्य मिश्राध्वताप्रतिपादनाय तत्र चिदचिद्व्यापि साङ्कर्य दर्शयति। अन्तरित्यादि मनसः अन्तस्थितस्य चैत्यस्य देहब्रह्माण्ड रूपस्य वेद्यस्य पूर्तियोगः पुर्त्युपपत्तिः। नहि तत्कवलितत्व विनिश्चयायाः तेनोभय विधेन चैत्येन कवलितत्वं व्याप्तत्वं तत्र विनिश्चयः प्रतिपत्तिदार्ढ्यं यस्याः सा तथोक्ता। चितेरपि वकारस्थानकस्यात्मनोऽपि तद्वत् न। यथा चैत्यस्य तथेत्यर्थः। पूर्ति चैत्यस्य चिदन्तर्गतत्त्वे परमार्थे चिद्व्याप्तिरेवास्तु। अन्यथा प्रतिपत्तिदोषेण परमार्थस्य न खलु व्याहतिरिति नाशङ्कनीयम् निर्विकल्पो परमार्थो मूलवस्तु, निर्विकल्प वशादेव खलु संसाराध्यवसायः। नहि पारमार्थिकः संसारः अतस्तत्तत्प्रतीतिरूप विमर्शभासिता भावा अतात्विकत्वेन नापह्नवनीयाः। तथात्वे सर्वस्यापि संसारस्यापह्नवीयत्व प्रसक्तेरित्यलम्। रहस्योपदेशान्तराय कथाभिः अतश्चिदचितोर्व्याप्तिनिर्णयानैकान्त्यात्। इयं दशास्वप्नः चिदचिद्रूपे पक्षद्वये स्फुरदपूर्त्यभिपूर्ति योगाः स्फुरन्त्योरपूर्त्यभिपूर्त्यो योगः संसृष्टिरस्यामिति सा तथोक्ता।।१९।।**

# भाषा टीका

## सूत्रसार -

आगामी सूत्र में स्वप्नावस्था में मिश्राध्वता का प्रतिपादन सूत्रकार करना चाहते हैं अतः भूमिका के रूप में इस सूत्र में चिदचिद् के साङ्कर्य का निरूपण करते हैं।

## व्याख्या

स्वप्नावस्था में चित् के अन्तर्गत चैत्य का लय हो जाता है, अतएव मन के अन्त में स्थित चैत्य का पूर्तियोग अर्थात् पूर्णत्व नहीं है। उसी के समान चित् का चैत्य में संसरण होने के कारण चैत्य के अन्तर्व्यापी चित् में भी पूर्णत्व नहीं है। इस प्रकार स्वप्नावस्था में चित् तथा चैत्य दोनों पक्षों में पूर्णत्व का योग सिद्ध नहीं है।

किन्तु यहाँ शङ्का उत्पन्न होती है कि परमार्थ दशा में चित् के अन्तर्गत चैत्य का विलय हो जाने से चित् के पूर्णत्व का प्रतिपादन होता है, अत: यहाँ चित् को अपूर्ण कहना दोष-युक्त है। इस शङ्का के समाधान के लिए टीकाकार लिखते हैं कि यद्यपि परमार्थ दशा में चैत्य की चित् के अन्तर्गत स्थिति होती है, यह निर्विवाद है; किन्तु परमार्थ मूल वस्तु है, जिसके कारण संसार का अध्यवसाय होता है, परन्तु संसार स्वयं पारमार्थिक नहीं है। अत: संसार की प्रतीति रूप विमर्श में भासित भाव अतात्त्विक हैं। इसी कारण वह अपन्हवनीय नहीं है। अर्थात् समस्त संसारात्मक प्रतीति अपन्हवनीय अर्थात् लय अवस्था में नहीं है, यही रहस्य-मार्ग का उपदेश है।

अत: चित् तथा अचित् की व्याप्ति का निश्चय एकान्तिक नहीं होता है, इस कारण से स्वप्न दशा में चित् तथा अचित् उभय की अपूर्णता प्रतिपादित करना अधिक युक्ति-युक्त है।

# विंशति सूत्रम्

अध्वाभवेच्चिदपकर्षवशादशुद्धः
शुद्धस्त्वसौ भवति चैत्यपदापकर्षात्।
चिच्चैत्ययोरूपचयाऽपचयाऽविशेषान्
मिश्रो हि मायिकपदं भवतीदमध्वा।।२०।।

## व्याख्या

**स्वप्नस्याशुद्धाध्वता प्रवचनप्रस्थाने सर्वस्याप्यध्वनः स्वरूपं व्युत्पादयति। अध्वेति चिदपकर्षवशाच्चैत्यस्य व्याप्त्या चित्तत्वस्यापकर्षे व्याप्यत्वे प्राप्ते तद्वशात्। अशुद्धः अध्वा भवति। यत्र यतो व्याप्यत्वादपकर्षः तदेव पदमशुद्धाध्वेति व्यवहृयते। भेद जाग्रज्जड सुषुप्तिश्चाऽशुद्धाध्वेत्यर्थः। तत्र चैत्य व्याप्तेरैकाधिपत्येन चितोव्याप्यत्वात्। असावध्वा चैत्यपदापकर्षात् शुद्धो भवति। शुद्ध इति व्यवह्रियते तुर्य पदं शुद्धाध्वा चिद् व्याप्तैरैकाधिपत्येन चैतस्य व्याप्यत्वात्। इदं मायिकपदं स्वप्नपदं चिच्चैत्ययोरूपचयापदयाविशेषात्। उपचयो व्यापकत्वं अपचयो व्याप्यत्वम्। तयोरविशेषः सामान्यभावः। चिच्चैत्ययोः प्रत्येकं व्याप्य व्याप्तिसामान्यत् मिश्रो ह्यध्वा भवति मिश्राध्वेति व्यवह्रियते। विश्वस्य चिन्मयत्वपारमार्थ्यात् तद्व्याप्ति प्रतीतिरेव शुद्धिः तद्वान् शुद्धः। चैत्यव्याप्तेश्चमत्कार मात्रतया चित्स्वरूपावरकत्वेन मलपर्यायतायां चैत्य व्याप्ति प्रतीतिंरशुद्धः तद्वानशुद्ध इति वेदितव्यम्। जाग्रदादीनामेव दशानां शिवजीवयो संचरणपर्यायें पुनः पुनरभ्यावृत्तिविषयतया व्यवहारः।।२०।।**

## भाषा टीका

### सूत्र सार -

इस सूत्र में स्वप्न की अशुद्धाध्वता के प्रवचन के तारतम्य में समस्त अध्वा के स्वरूप का निरूपण करते हैं।

## व्याख्या

चित् के अपकर्ष के वश अध्वा अशुद्ध होती है। चैत्य के अपकर्ष में यह शुद्ध होती है; तथा चित्-चैत्य के अपकर्ष एवं उत्कर्ष की समानता में अध्वा का मिश्र-स्वरूप होता है, जो मायिक-पद कहा जाता है।

चैत्य की व्याप्ति के कारण चित् का अपकर्ष हो जाता है, अतः इस

अवस्था में अध्वा की अशुद्धता कही जाती है। नियम है कि जहाँ जिसके व्याप्यत्व के कारण अपकर्ष होता है, उसी पद का अशुद्ध अध्वा कहा जाता है। अत: भेद-जाग्रत् अवस्था में जड-सुषुप्ति अशुद्ध अध्वा है, क्योंकि यहाँ चैत्य के एकाधिपत्य के कारण चित् का व्याप्यत्व होता है।

जब चैत्य-पद का अपकर्ष होता है तब यही अध्वा शुद्ध कही जाती है। अत: तुर्य पद शुद्ध अध्वा है, क्योंकि यहाँ चित् की व्याप्ति का एकाधिपत्य होने से चैत्य का व्याप्यत्व होता है। (उपचय का अर्थ है व्यापकत्व तथा अपचय का अर्थ है व्याप्यत्व)। जब चित् तथा चैत्य का समान रूप से व्यापकत्व तथा व्याप्यत्व होता है तब स्वप्नावस्था में वह मायिक-पद मिश्र-अध्वा के नाम से कहा जाता है।

पारमार्थिक अवस्था में विश्व चिन्मय है; अत: चित् की व्याप्ति की प्रतीति को ही शुद्धि कहा गया है। अत: चित्-व्याप्ति प्रतीति से युक्त अध्वा शुद्ध है।

चैत्य की व्याप्ति के चमत्कार मात्र से चित् का स्वरूप आवृत्त हो जाता है, अत: मल की पर्याय भूत चैत्य की व्याप्ति की प्रतीति ही अशुद्धि है। अत: इस अशुद्धि से युक्त अध्वा अशुद्ध है।

शिव तथा जीव की जाग्रदादि अवस्थाओं में पुन: पुन: अभ्यावृत्ति अर्थात् सञ्चरण का विषय होने के कारण इसका अध्वा नाम से व्यवहार होता है।

## एकविंशति सूत्रम्

आत्मा वकार वपुषाणुरुकारएव
देहात्मनैव खलु संसृतिरस्य जन्तोः ।
देहश्च तात्त्विकममुष्य सुषुप्तमेव
स्वप्ने तदत्र मन एव शरीरताभाक्।। २१।।

## व्याख्या

**प्रकरणमुपसंहरण स्वप्नेमनस एव शरीरत्वमिति विप्रतिपत्तिविषयत्वात् सविशेषं प्रतिपादयति। आत्मेति। अकारादि रूपे सुषुप्तिपदे आत्मस्थानीये य उकारः सोऽयमुकारूपेयमात्मा स्वप्नपदे वकारवपुषा वकाररूपेण अणुः संकुचितः। अस्यवकार रूपस्य जन्तोः जीवस्य देहात्मनैव देहरूपेणैव संसृतिः**

संसरणं खलु शिववद्देहबन्धं विना निर्मल चिदाकाश रूपेण संसरणलीला चमत्कारानुसन्धानं न संभवतीति भावः। अतो जीवस्य संसरणे देहमवश्यं स्वप्नेमनः कल्पितम्। तात्त्विकं देहं सुषुप्तमेव निमीलितवहिरिन्द्रिय ग्रामं सच्छय्यातलं न जह्यातीति भावः। तस्यैव स्वप्न संसारिणोऽधिष्ठातृत्वे स्वप्नसंभाविताङ्गुलिच्छेदादेर्जाग्रति सम्पात्प्रक्तेः। यद्यपि तात्विकस्यापि देहस्य मनोभूलत्वं तथापि लौकिक प्रतीत्यपेक्षयाऽतात्विकं मनः कृतमित्युक्तम्। तत्तस्मात्कारणादत्र स्वप्ने मन एव पारिशेप्यादितिभावः। शरीताभाक् शरीत्वं भजतीति सम्प्रतिपन्नम् लौकिकस्यापीत्यर्थः।।२१।।

इति मातृकाचक्रविवेके स्वप्न-विवेकस्तृतीयः खण्डः

## भाषा टीका

### सूत्र सार -

अ-कार आदि स्वर-रूप सुषुप्ति पद में आत्मावबोधक उ-कार स्वप्नपद वकार के रूप में संकुचित हो जाता है। इस वकारात्मक जीव का ही देह-रूप से संसरण होता है।

### व्याख्या

चिदाकाश में शिव की लीला के समान, जीव की संसरणात्मक लीला के चमत्कार का अनुसंधान देह रूप बंधन के बिना संभव नहीं है। अतएव स्वप्नावस्था में जीव के संसरण में निश्चित रूप से मन को ही देह के रूप में कल्पित किया गया है। यहाँ बाह्य इंद्रियों के निमीलित हो जाने पर भी तात्त्विक देह की छाया शेष रह जाती है।

स्वप्न-संसार में प्रवर्तित मन को ही यदि अधिष्ठाता स्वीकार किया जावे तब स्वप्नावस्था में अंगुलि आदि के विच्छेद की अनुभूति को जाग्रदात्मक अनुभूति के समान ही मानना होगा; ऐसी शंका उत्पन्न होती है, किन्तु तात्त्विक सृष्टि भी मनोमूलक है, अत: यह शंका युक्तियुक्त नहीं है। साथ ही लौकिक प्रतीति की अपेक्षा से भी अतात्त्विक मन को ही देह के रूप में स्वीकार किया गया है। इस प्रकार पारिशेष्य सिद्धान्त के अनुसार स्वप्न में मन ही शरीरता को प्राप्त करता है। अर्थात् मन ही प्रमाता है।

इति मातृकाचक्र विवेके स्वप्नविवेक: तृतीय: खण्ड:

## विशेष

शम्भोः दक्षिणमक्षिभूतवितते: शोषे यकारः
पटुर्नेत्रं मध्यममुष्य लोक दहने जागर्ति रेफाक्षरं।
विश्वाप्लावक कर्मठं पशुपतेर्वामेक्षणेवाक्षरम्
त्रैनेत्रंपदमाददाति जपतामेतृत्रयंदेहिनाम्।।१।।

शम्भु के दक्षिण नेत्र में उद्भूत विस्तार के शोषण में य-कार पटु है। मध्यनेत्र में स्थित लोकों के दहन में रेफ अक्षर सदैव जाग्रत रहता है। पशुपति के वाम नेत्र में स्फुरित विश्व के आप्लावन के हेतु व अक्षर कर्मठ है। जो य, र, व तीन अक्षरों का जप करता है, उसको त्रैनेत्र पद की व्याप्ति होती है।

सुप्त्या मग्नस्य जलधौ विश्वस्योद्धृत्यधारणात्
मन्त्रविद्भिर्यवर्गोऽयम् धारणाशक्तिरुच्यते।।२।।

सुप्ति रूप जलाधि में मग्न विश्व को उद्धृत कर पुनः धारण करता है अतः मन्त्रज्ञ विद्वान य-वर्ग को धारणा शक्ति के नाम से सम्बोधित करते हैं।

वकारश्चलकारश्चभित्वा बुद्ध्यातितीक्ष्णया
वलभिद्वलभित्प्रोक्तो न वलो नाम राक्षसः।।३।।
स्थितिरिन्द्रे हि विश्वस्य लकारे मानसे तथा
तदिन्द्राख्या लकारस्य मन्त्रवित्साम्प्रदायिनी।।४।।

अत्यन्त तीक्ष्ण बुद्धि से व-कार एवं ल-कार का भेदन कर, व एवं ल का भेदन करनेवाला वलभित् कहा गया है। अन्यथा वल नाम का कोई राक्षस नहीं है।

बलभित् इन्द्र का नाम है। बलभित का अर्थ है बल अर्थात् वकार एवं लकार का भेदन करने वाला। अन्यत्र वल को राक्षस के रूप में प्रस्तुत किया है। अतः टीकाकार ने स्पष्ट किया है कि वल नाम का कोई राक्षस नहीं है; जिसको भेद कर इन्द्र की पदवी प्राप्त हो। अपितु वकार जल का बीज है; तथा लकार पृथ्वी का बीज है जिसको भेद करने से साधक वलभित् कहा जाता है।

**भेदप्रत्ययघस्मैरैर्नवरसैः पेयैर्यकारात्मकैर्लाकारै**
**रूपदंशनैश्च रदनोत्पत्तिक्रियायाः फलैः।**
**मायां ये समुपासतेकृतधियस्तेषां यवर्गास्थितं**
**मायास्फूर्तिरहस्यमन्तरचिरादुद्योततेस्वात्मनि ।।५।।**

भेद ज्ञान रूप नवरस के मन्थन से उद्भूत यकारात्मक पेय से एवं लाकार रूप उपदंश से रदन क्रिया रूप फल की उत्पत्ति के द्वारा अर्थात् एकीकृत भेदज्ञान के पेय तथा फल के चर्वण से जो माया की उपासना करता है, वह कृत-बुद्धि साधक अ-वर्ग में स्थित हो जाता है, अर्थात् ज्ञान में प्रवेश कर जाता है। तथा माया की स्फूर्ति का रहस्य शीघ्र ही उसके अन्तः में प्रकाशित हो जाता है।

**शिवानन्देनमुनिनादेशिकादेशवर्तिना**
**तृतीयंमातृकाचक्र विवेके व्याकृतं पदम्।।६।।**

गुरु की कृपा से शिवानन्द मुनि ने श्रीमातृकाचक्र-विवेक के तृतीय खण्ड में इन पदों की रचना की है।

इति श्री स्वतन्त्रानन्दनाथ विरचित श्रीमातृकाचक्र-विवेक की शिवानन्द कृत संस्कृत व्याख्या एवं कृष्णानन्दकृत हिन्दी व्याख्या का तृतीय खण्ड।

तृतीय खण्डः



# अथ चतुर्थः खण्डः

## प्रथमं सूत्रम्

इत्यन्तरीषदिह सङ्कुचिते विमर्शे
सङ्कोचमाश्रयति बाह्यपदे प्रगाढम्।
प्रत्येकमेव कलयन्त्यथ भावमेवम्
भूतानि पञ्चजगतो नियतः कलापः।।१।।

### व्याख्या

अथ स्कन्धान्तरमारंभमाणः पूर्वोत्तर स्कन्धयोः सम्बन्धदर्शनाय पूर्व स्कन्ध प्रमेयानुवाद पूर्वकमुत्तरस्कन्ध प्रमेयं प्रस्तौति इतीत्यादि। इत्युक्त प्रकारेण अन्तरन्तःकरणकक्ष्यां इह स्वप्नदशायांईषत्सङ्कुचिते विमर्शे बाह्यपदे बाह्येन्द्रिय कक्ष्यायां जाग्रति प्रगाढमतिमात्रं सङ्कोचमाश्रयति। भूतानि जगतो नियतः कलापः। जगतो भूत परिणाम रूपत्वात् भूतानां नियमेन जगत्कलापत्वम्। प्रत्येकं पञ्चभावंकलयन्ति प्राप्नुवन्ति विमर्शस्याति सङ्कोचपदे जाग्रति भूतानापम्यतिसङ्कोच परिग्रहात्। पृथिव्यादीनामेकैकस्य पृथिव्यादि पञ्चरूपत्वेनाति सङ्कोचः। पशु प्रमातृ पदस्य सलिलस्य पुरुष प्रकृत्यादि रूपेण पञ्चभूतात्मतयातिसङ्कोचः। पशु प्रमातृ ज्ञानेन्द्रिय पदायाः पृथिव्याः श्रोत्र त्वगादिरूपेण पञ्चभूतात्मतयातिसङ्कोचः। पशु प्रमातृ कर्मेन्द्रिय पदस्याग्नेर्वाक्पाण्यादि रूपेण पञ्च भूतात्मतयाति संकोचः। पशु प्रमातृ ज्ञेय वेद्य पदस्य वायोः शब्द स्पर्शादि रूपेण पञ्चभूतात्मतयातिसङ्कोचः। पशु प्रमातुः कार्य वेद्य रूपस्या काशस्याकाश वाय्वादि रूपेण पञ्चभूतात्मतयातिसङ्कोचः। अत्रायमर्थो गम्यते भूतानां प्रत्येकं पञ्चभूतात्मतया विलसनं स्वभावः। सुषुप्ति स्वप्नयोरपि सङ्कोचाविषयत्वान्नोन्मिषति। जाग्रत्यति सङ्कोच पदे तु समुन्मिषतीति। एतेन भूतानामपि सर्वेषां सर्व भूतैः सहाविना भाव नियम इति वेदितव्यम्।।१।।

# भाषा टीका

## सूत्र सार -

प्रस्तुत खण्ड की प्रस्तावना, विगत तथा आगामी खण्ड के प्रतिपाद्य विषय एवं सम्बन्ध का दिग्दर्शन प्रथम सूत्र में कराया गया है।

### व्याख्या

पूर्व खण्ड में अन्तःकरणभूत स्वप्नावस्था में विमर्श के ईषत् सङ्कोच की चर्चा की गई है। स्वप्नगत ईषत् सङ्कुचित विमर्श का इन्द्रियात्मक बाह्य जाग्रत् अवस्था में पूर्ण सङ्कोच हो जाता है। जगत् पञ्च-महाभूतों के नियमित कलाप का परिणाम है। अतएव विमर्श-पद की पूर्ण सङ्कोचक जाग्रत् अवस्था में पञ्च-भूतों का भी पूर्ण सङ्कोच हो जाता है। विमर्श की पूर्ण सङ्कोचावस्था में पाँचों तत्त्वों के अन्तर्गत प्रत्येक भूत का समावेश रहता है, अर्थात्, सङ्कोच की परम सीमा जाग्रत् में एक रूप पृथ्वी-तत्त्व के अन्तर्गत पाँचों तत्त्वों का समावेश विद्यमान रहता है।

जीव-प्रमाता में प्रत्येक तत्त्व की संकुचित अवस्था में सलिल का पुरुष-प्रकृति आदि रूपों में, ज्ञानेन्द्रियात्मक पृथ्वी का श्रोत्र-त्वग आदि रूपों में, अग्नि का वाक्-पाणि आदि रूपों में, तथा कारण-भूत आकाश का कार्य रूप आकाश अर्थात् वायु आदि के रूप में, पूर्ण सङ्कोच हो जाता है। इसका तात्पर्य है कि पृथ्वी आदि प्रत्येक भूत के अन्तर्गत पाँचों भूतों का विलास होता है। इस प्रकार पंच-भूतों का सङ्कोच केवल जाग्रत अवस्था में घटित होता है, स्वप्न तथा सुषुप्ति इन अवस्थाओं में पंच-महाभूतों का उन्मेष नहीं होता है; केवल अव्यक्त रूप में स्थिति रहती है।

इस प्रकार सिद्धान्त के प्रतिपादन से पंचभूतों के परस्पर अविनाभाव सम्बन्ध की सिद्धि भी होती है।

# द्वितीयं सूत्रम्

यद्वर्ण पञ्चकमपूर्वकमादि वर्ग्य-
मन्तस्थतां भजति सङ्कुचितेतदीषत्।
तत्कादि वर्ग तनु सङ्कुचितं नितान्त
मूष्मात्मकञ्च दधतेऽङ्कुरिताभिपूर्ति।।२।।

## व्याख्या

इदानीं जाग्रत्प्रस्तावे कादिमान्त स्पर्शवर्णानां सङ्कोचाधिक्य दर्शनाय सर्ववर्ण कारणरूपस्याकारादिवर्ण पञ्चकस्य स्फुरणे प्रतिपादित प्रक्रियां व्युत्पादयति यद्वर्णेत्यादि। आदि वर्गः-वर्णानामादित्वादादिवर्गः स्वरवर्गः। तत्र भवम् आदिवर्ग्यम्। अपूर्वकम् अकारः पूर्वोयस्य वर्णपञ्चकस्य तदपूर्वकम् यद्वर्णपञ्चकं अकारेकारोकार ऋकार लृकार रूपम्। तदेवं वर्णपञ्चकं ईषत्सङ्कुचितं सत् ईषत्स्पृष्टता प्रयत्नविषयतया ईषत्सङ्कुचितं सत् अन्तस्थतां यकारादि रूपतां भजति। इतीकारस्येषत्सङ्कोचो यकारः ऋकारस्य रेफः लृकारस्य लकारः उकारस्य वकारः सङ्कोचः मनस एव लकारस्थानकस्य विसर्ग प्रमातृ पर्याय देह रूपत्वादकारसङ्कोचो नास्ति। एवमकारादि वर्ण पञ्चकस्यैव रूपान्तरमन्तस्थवर्गः तदेव वर्ण पञ्चकं नितान्त सङ्कुचितं स्पृष्टताविषयतयाति सङ्कुचितं सत् कादि वर्ग तनु-कवर्गादि वर्ग पञ्चक स्वरूपम्। अकारस्य सङ्कोचः कवर्गः इकारस्य सङ्कोचः च वर्गः ऋकारस्य सङ्कोचस्टवर्गः लकारस्य सङ्कोचस्तवर्गः। उकारस्य सङ्गोचः पवर्गः अथ तदेव वर्ग पञ्चकं अङ्कुरिताभिपूर्ति ईषद्विवृत्ति प्रयत्न विषयतया अङ्कुरित पूर्णत्वं सत् ऊष्मात्मकं च दधते भजति। पवर्ग पञ्चक रूपेण सङ्कुचितस्याकारादि वर्ण पञ्चकस्येषत्पूर्णत्वरूपा ऊष्माण इत्यर्थः। चवर्गस्येषत्पूर्णत्वं शकारः। टवर्गस्येषत्पूर्णत्वं षकारः। तवर्गस्ये षत्पूर्णत्वं सकारः। कवर्गस्येषत्पूर्णत्वं हकारः। एवं कारणरूपस्याकारादि वर्ण पञ्चकस्यैव दशा विशेषास्तत्कार्यरूपाः सर्व वर्णा इति विवेकः।।२।।

## भाषा टीका

**सूत्र सार -**

अ, इ, उ, ऋ, ल पांच वर्ण अन्य समस्त वर्णों की उत्पत्ति का करण हैं। क से म पर्यन्त स्पर्श वर्ण कार्य रूप जाग्रत् अवस्था के द्योतक हैं अतः

स्पर्श-वर्ण समूह में सङ्कोच का आधिक्य है जिस को सिद्ध करने के हेतु प्रथम कारण रूप अ-कार आदि पाँच वर्णों के स्फुरण की प्रक्रिया सिद्ध करना आवश्यक है जो इस सूत्र का विषय है।

## व्याख्या

स्वर वर्ग का वर्णमाला के अन्तर्गत आदि स्थान है, अत: इस को आदि-वर्ग के नाम से सम्बोधित किया जाता है। स्वर-वर्ग के प्रथम पाँच वर्ण अ, इ, उ, ऋ, लृ के उच्चारण में अवयवों का स्पर्श ईषत् होता है। अत: यह पांचों वर्ण ईषत्-स्पृष्ट कहे जाते हैं। अवयवों के स्पर्श से स्वर संकुचित हो जाता है अत: इसको ईषत्-संकुचित भी कहते हैं। ईषत् सङ्कोच के कारण अकार आदि पाँचों वर्ण अन्त:स्थ वर्णों के रूप में परिवर्तित हो जाते हैं। अर्थात् इकार यकार में, उकार वकार में ऋकार रकार में तथा लृकार लकार में परिवर्तित हो जाता है।

यही ईषत्-स्पृष्ट स्वर-पञ्चक जब पूर्ण संकोचावस्था को प्राप्त करते हैं तब अ-कार आदि पांचों वर्ण क-वर्ग, च-वर्ग, ट-वर्ग, त-वर्ग तथा प-वर्ग के रूप में परिवर्तित हो जाते हैं। इस प्रकार अ-कार का क-वर्ग, इकार का च-वर्ग, ऋकार का ट-वर्ग, लृकार त-वर्ग तथा उकार का प-वर्ग पूर्ण संकुचित स्वरूप है।

अकार आदि वर्ण-पञ्चक जब ईषत्-विवृत्ति का विषय होते हैं तब पूर्णत्व के अङ्कुरित होने पर पाँचों वर्णों के उच्चारण में ऊष्मता का स्फुरण होता है। अत: प-वर्ग के रूप में सङ्कुचित अकार आदि का ईषत्-विवृत रूप श, स, स, ह ऊष्माण वर्ण समूह है। परिवर्तन की इस प्रक्रिया में च-वर्ग का शकार, ट-वर्ग का षकार, त-वर्ग का सकार, क-वर्ग का हकार ईषत्-विवृत रूप है। इस प्रकार कार्य-रूप समस्त वर्ण समूह कारण-रूप अकार आदि वर्ण-पञ्चक की दशा विशेष हैं।

## तृतीयं सूत्रम्

स्थानेन साधितधरा प्रभृतिस्वभावे
वर्णोत्करे भवति मातृपदं प वर्गः।
आत्मामनस्तदनु बुद्धिरहंक्रिया च
प्राक्चेतसः प्रकृतिरप्यवरोह भङ्ग्या॥३॥

## व्याख्या

अथ स्पर्श कदम्बकस्य स्थान वशात् पृथिव्यादि रूपत्व विवेकं प्रागुक्त प्रमेयतया सूचयन्निति तत्प्रमातृ पदस्य पवर्गस्य वर्ण पञ्चके तत्प्रतिपाद्यं तत्वपञ्चकं व्युत्पादयति स्थानेति। स्थानेन कण्ठताल्वादिना साधितधरा प्रभृति स्वभावे प्रागुक्तप्रक्रियया नीचोच्चस्थाने पर्यालोचनया निश्चित पृथिव्यादि स्वभावे वर्णोत्करे स्पर्शवर्णकदम्बके पवर्गो मातृपदं प्रमातृस्थानं भवति। यद्यपि कवर्गस्यैव व्यापकतया प्रमातृ पदत्वं तथापि चैतस्य प्रमातृत्वं वैकारिकम्। चितः प्रमेयत्वञ्च तथेति चित्पदस्य पवर्गस्य प्रमातृ पदव्यवहारः पूर्व शाशसनयेति निरवद्यम्। अवरोह भङ्ग्याविलोम क्रमेण मकारमारभ्य पकार पर्यन्तमित्यर्थः। आत्मा, मनः, बुद्धिः अहंक्रिया प्रकृतिरिति पवर्गवर्णानां विलोमक्रमेण तत्व पञ्चक स्वरूपता। तद्भावकत्वे तत्स्वरूपत्वमुपचारतः मकार आत्मा पुरुष तत्वभित्यर्थः। भकारो मनस्तत्वं बकारो बुद्धितत्वं फकारो अहंकार तत्वं पकारो प्रकृति तत्वमिति विज्ञेयम्। पकारादि वर्णपञ्चकस्य पृथिव्याद्याकाशान्तरा (ता) यां सत्यामेव प्रकृत्यादि व्यवहारः। पृथिब्यंशः प्रकृतिः जलांशोऽहंकारः। अग्न्यांशो बुद्धिः वाय्वंशो मनः आकाशांशः पुरुष इति विवेकः। एवमितर वर्ग चतुष्टयस्यापि प्रथम वर्णादारभ्य पृथिब्याद्यंशतत्वे सत्येव वक्ष्यमाण तत्तत्तत्वरूपता विज्ञेया। ननु पुरुषतत्वानन्तरं प्रकृतितत्वमिति प्रवादः तत्कथमत्र क्रम विरोध इत्यत्राह प्राक्चेतस इति। चेतसो मनसः प्राक् प्रथमं प्रकृतिरिति तत्वोदय क्रमः। अकार पृथिवी रूपयोः पुरुषः प्रकृत्योर्धर्मिणोरनन्तरं तद्धर्म भूतानां मनोबुद्ध्यहंकाराणामुदस्यो-पपत्तिः तथापि तेषां धर्माणाँ धर्मिद्वयमध्य एवोदयात्। मध्यगता परिगणना, उदयापेक्षया धर्माणां धर्मिद्वयानन्तर्यमनवस्थित्यपेक्षया तु धर्मिद्वय मध्यत्वमिति भावः। मध्यत्वेऽपि मनसः पुरुष धर्मत्वात् तत्समीप एरावस्थानम्। अहङ्कारस्य प्रकृति धर्मतया प्रकृति समीप एव स्थितिः मनोऽहंकारयोर्मध्ये उभय धर्मस्य बुद्धेः स्थितिरिति विज्ञेयम्। विसर्ग व्याप्तौ प्रकृत्यहंकार बुद्धि मनः पुरुषः इति बिन्दु व्याप्तौ पुरुषमनो बुद्ध्यहंकार प्रकृतयः इति क्रमः तदत्र विसर्ग व्याप्तैः प्राथम्यात् प्रकृत्यादिकः क्रमोङ्गीकर्त्तव्यः।।३।।

## भाषा टीका

### सूत्र सार -

स्पर्श-वर्णों की तालिका के अन्तर्गत उच्चारण-स्थान के तारतम्य से पृथ्वी

आदि तत्त्वों के स्वरूप का, पूर्वोक्त सिद्धान्त के अनुसार, प्रतिपादन किया जा चुका है। इस सूत्र में प-वर्ग को प्रमातृ पद के रूप में प्रतिपादित करने के हेतु पाँचों वर्णों का पृथक-पृथक् व्युत्पादन करते हैं।

## व्याख्या

पूर्व में कंठ, तालु आदि स्थानों में उत्कर्ष तथा अपकर्ष के आधार पर क्रम से पृथ्वी आदि तत्त्वों के स्वभाव का प्रतिपादन किया गया है। इस सूत्र के सिद्धान्त के अनुसार प-वर्ग प्रमातृ-पद यद्यपि व्यापकता के कारण पृथ्वी आदि पञ्च तत्त्वों के द्योतक है। क-वर्ग को प्रमातृ-पद के रूप में स्वीकार किया जाता है किन्तु चैत्य दशा में प्रमाता वैकारिक होता है, एवं तदनुसार चित् भी वैकारिक प्रमेय रूप हो जाता है अतएव पूर्व निर्दिष्ट सिद्धान्त के अनुसार प वर्ग को ही प्रमातृ पद के रूप में स्वीकार करना युक्ति युक्त है।

प-वर्ग के मकार से पकार पर्यन्त वर्णों के स्वरूप का विलोम क्रम से प्रतिपादन करते हैं। मकार आत्मा का, यकार मन का, ब-कार बुद्धि का, फ-कार अहङ्कार का तथा प-कार प्रकृति का द्योतक है। वर्णों में तत्त्वों का भाव है अत: प-वर्ग के वर्णों का पञ्च तत्वात्मक स्वरूप है। पृथ्वी आदि पञ्च तत्त्वों के द्योतक पकार आदि पाँच वर्ण हैं, अत: पकार आदि वर्णों का प्रकृति आदि नाम से व्यवहार किया जाता है। अर्थात् पृथ्वी का अंश प्रकृति है, जल का अंश अहङ्कार है, अग्नि का अंश बुद्धि है, वायु का अंश मन है, आकाश का अंश पुरुष है। इसी प्रकार इतर वर्ग-चतुष्टय में, प्रथम वर्ण से अन्तिम वर्ण तक पृथ्वी पञ्च तत्त्वों के द्योतक हैं तथा जिसके अनुसार ही इनका स्वरूप कहेंगे।

साधारणतया पुरुष तत्त्व के पश्चात् प्रकृति तत्त्व की उत्पत्ति का क्रम प्रतिपादित किया जाता है, किन्तु यहाँ पुरुष के पश्चात् मन का निरूपण किया गया है। यह शंका का विषय हो जाता है। अत: क्रम भंग के कारण का स्पष्टीकरण करते हैं।

आकाश एवं पृथ्वी तत्व के स्वरूप पुरुष एवं प्रकृति धर्मी हैं, मन, बुद्धि तथा अहंकार इनके धर्म हैं। धर्मी से धर्म की उत्पत्ति होती है, अत: मन, बुद्धि तथा अहङ्कार की उत्पत्ति पुरुष तथा प्रकृति रूप धर्मी से है। तात्पर्य यह कि पुरुष तथा प्रकृति दोनों धर्मियों की उत्पत्ति के पश्चात् मन आदि धर्मों की उत्पत्ति स्वीकार करने की अपेक्षा दोनों धर्मियों के मध्य में मन आदि की स्थिति की

गणना अधिक उपयुक्त है। प्रकृति तथा पुरुष के मध्य में स्थित होने पर भी मन पुरुष का धर्म है अतएव मकार से अवबोधित पुरुष के निकट भकार से अवबोधित मन की स्थिति दर्शाई गई है। फकार के द्वारा अवबोधित अहङ्कार प्रकृति का धर्म है, अत फ-रूप पृथ्वी के निकट फकार रूप अहङ्कार की स्थिति है। मन तथा अहङ्कार दोनों का धर्म बुद्धि है अतएव दोनों के मध्य में अर्थात् फ एवं भ के मध्य में बुद्धि रूप ब की स्थिति है।

विसर्ग-व्याप्ति में प्रकृति अहङ्कार, बुद्धि, मन तथा पुरुष क्रम से व्यवस्था की जाती है तथा बिन्दु-व्याप्ति में इसके विलोम पुरुष, मन, बुद्धि अहङ्कार तथा प्रकृति क्रम से गणना की जाती है। विसर्ग की व्याप्ति प्रथम होती है अतः प्रकृति आदि क्रम से उल्लेख करने से अभिप्राय है कि यहाँ विसर्ग व्याप्ति के क्रम का प्रतिपादन किया गया है।

## चतुर्थ सूत्रम्

**श्रोत्रादिकं खलु तवर्गमयं विलोमा-**
**द्वागादि पञ्चकमिदञ्च टवर्ग रूपम्।**
**शब्दादि खाद्यपि चवर्ग कवर्गरूप**
**मेतानिवायुदहनाम्बुमहीविलासाः।।४।।**

### व्याख्या

**पवर्ग वर्ण प्रतिपाद्यानि तत्वानि उक्त्वा तवर्गादि वर्ण प्रतिपाद्यान्यपितत्वानि व्युत्पादयति। श्रोत्रादिकमित्यादि श्रोत्रादिकं श्रोत्रत्वक् चक्षुर्जिह्वाघ्राणरूपं तत्त्वपञ्चकं। विलोमात्त्वर्गमयं विलोमक्रमिक तवर्गरूप नकारादि तकारान्त वर्णपञ्चक रूपमित्यर्थः। अत्रापि नकारप्रतिपाद्य श्रोतृतत्वमाकाशांशः। धकार प्रतिपाद्या त्वक् वाय्वंशः। दकारप्रतिपाद्यं चक्षुस्तेजोंऽशः थकार प्रतिपाद्याजिह्वा जलांशः। तकारप्रतिपाद्यःघ्राणःपृथिव्यंश इति विज्ञेयं। इदं प्रत्यक्ष निर्देश्यंवागादि पञ्चकञ्चवाक्पादपाण्युपस्थपायुरूप तत्व पञ्चकं। विलोमादित्यस्यात्रापि संबंधः। विलोमक्रमिकटवर्गरूपंणकार आकाशांसो वाक्। ढकरोवाय्वंशःपादौ। डकारस्तेजोंऽशंः पाणी। ठकारोजलांश उपस्थः। टकारः पृथिव्यंश पायू। शब्दादि शब्दस्पर्श रूप रसगन्धरूप तत्वपञ्चकमाकाशाद्यपि च आकाश वाय्वग्नि जलपृथिवीरूपं तत्वपञ्चकञ्च। क्रमेण चवर्ग कवर्ग रूपं। अत्रापिविलोमादित्य-**

**स्यानुवृत्तिः। अकार आकाशांशः शब्दः झकारो वाय्वंशः स्पर्शः। जकारस्तेजोंऽशंः रूपम्। छकारःसलिलांशो रसः। चकारः पृथिव्यंशोगन्धः। ङकार आकाशः। घकारोवायुः गकारस्तेजः खकार सलिलम्। ककारःपृथिवीति विवेकः। एतानितवर्गादि वर्गचतुष्टयतत्वानि वायु दहनाम्बु महीविलासाः। वायोस्तवर्गाधिष्ठातृत्वात् तवर्गप्रतिपाद्य तत्वानि वायु विलासा इति विज्ञेयं। अग्नेष्टवर्गाधिष्ठातृत्वात् टवर्गप्रतिपाद्यतत्वानि अग्निविलासाः। जलस्यचवर्गाधिष्ठातृत्वात् चवर्ग प्रतिपाद्यतत्वानिजलस्य विलासाः। पृथिव्याः कवर्गाधिष्ठातृत्वात् कवर्ग प्रतिपाद्यतत्वानिपृथिवीविलासा इति विवेकः।।४।।**

## भाषा टीका

### सूत्र सार -

प-वर्ग द्वारा प्रतिपाद्य तत्त्वों का वर्णन करने के पश्चात् त-वर्ग आदि वर्णों के द्वारा प्रतिपाद्य तत्त्वों का इस सूत्र में व्युत्पादन करते हैं।

## व्याख्या

विलोम-क्रम से श्रोत्रादि इन्द्रियाँ त-वर्ग मय हैं। श्रोत्र का द्योतक नकार, त्वक् का द्योतक धकार, चक्षु का द्योतक दकार, जिह्वा का द्योतक थकार, तथा घ्राण का द्योतक तकार है। यहाँ भी नकार द्वारा प्रतिपाद्य श्रोत्र-तत्त्व आकाश का अंश है, धकार द्वारा प्रतिपाद्य त्वक् वायु का अंश है। दकार द्वारा प्रतिपाद्य चक्षु तत्त्व तेज का अंश है, थकार द्वारा प्रतिपाद्य जिह्वा जल का अंश है, तथा तकार द्वारा प्रतिपाद्य घ्राण पृथ्वी का अंश है।

वागादि तत्त्व-पञ्चक का द्योतक ट-वर्ग है। विलोम-क्रम से आकाश का अंश णकार वाक्-तत्त्व है। ढकार वायु का अंश पाद है, तेज का अंश डकार पाणि-तत्त्व है, जल का अंश ठकार उपस्थ है, तथा पृथ्वी का अंश टकार पायु है।

शब्द, स्पर्श, रूप, रस, गन्ध तत्त्व-पञ्चक आकाश, वायु, तेज, जल तथा पृथ्वी च वर्ग एवं क वर्ग का रूप है।

इसी प्रकार च-वर्ग तथा क-वर्ग भी विलोम क्रम से आकाशादि रूप हैं। आकाशांश ञ शब्द, वायु-अंश झकार स्पर्श, तेजांश जकार रूप, सलिलांश

चकार रस, पृथ्वी-अंश च-कार गन्ध है तथा ङ्ङ्कार आकाश, घकार-वायु, गकार तेज, ख-कार सलिल क-कार पृथ्वी के द्योतक हैं।

त-वर्ग, ट-वर्ग, च-वर्ग तथा क-वर्ग द्वारा अवबोधित तत्त्व वायु, अग्नि, अम्बु तथा मही तत्त्व के विलास मात्र हैं। वायु त-वर्ग का अधिष्ठाता है अतः त-वर्ग द्वारा प्रतिपाद्य तत्त्व वायु के विलास हैं, अग्नि ट-वर्ग का अधिष्ठाता है अतः ट-वर्ग-प्रतिपाद्य तत्त्व अग्नि के विलास हैं, जल का अधिष्ठाता च-वर्ग है अतः च-वर्ग-प्रतिपाद्य तत्त्व जल के विलास हैं, पृथ्वी का अधिष्ठाता क-वर्ग है अतः क-वर्ग-प्रतिपाद्य तत्त्व पृथ्वी के विलास मात्र हैं।

## पञ्चमं सूत्रम्

देहात्मिका प्रकृतिरान्तर रूपमुर्व्याः
सूक्ष्मं जलस्य खलु रूपमहङ्क्रिया स्यात्।
अग्नेस्तु बुद्धिनिलस्य मनोऽन्तरात्मा
सर्गः खलु प्रकृतिजः क्षिति सर्गबीजम्।।५।।

### व्याख्या

**इदानीं क च ट त वर्ग तत्वात्मनः स्थूलस्य पृथिव्यण्डस्य प वर्ग वर्ण रूप प्रकृत्यन्तं सूक्ष्मरूपतया कारणमिति प्रतिपादयति देहात्मिकेति। देहात्मिका देहरूपिणी प्रकृतिः देहाभिमान एव प्रकृतिरिति व्यवह्रियते। सा प्रकृतिः उर्व्याः पृथिव्याः क वर्ग रूपिण्याः इति भावः। आन्तरं अन्तः कक्ष्यास्थितं रूपं स्वरूपं सूक्ष्मं रूपं अहंक्रियाहङ्कारः चवर्ग रूपस्य सलिलस्याऽऽन्तरं रूपं स्यात् खलु। आग्नेष्ट वर्ग रूपस्य अन्तरात्मना बुद्धिः। अनिलस्य त वर्ग रूपस्य अन्तरात्मना मनः। एवं प्रकृतिज संसारः। प वर्ग वर्ण चतुष्टयं भवति। रूप प्रकृति संसारः। क्षिति वर्गस्य कवर्गादि वर्ग चतुष्टयात्मनः पृथिवीं संसारस्य बीजं कारणम्. सूक्ष्मस्य प्रकृतिसंसारस्यैव स्थूलभावः पृथिवी संसार इति। प्रकृति संसारस्य ब्रह्माण्ड पर्यायस्य कार्यत्वं स्वाभाविकस्य प्रकृत्यन्तस्य पृथिव्यन्त मूलत्वम्। प्रकृत्यन्तस्तु माया विलास इति तात्पर्यम्। अतएव चतुरस्र रूपस्य प्रकृत्यन्तस्य रविबिम्बत्वं दशारयुग्म रूपस्य पृथिव्यन्तस्य रश्मि चक्रत्वं महायन्त्रे विभाव्येत।।५।।**

## भाषा टीका

**सूत्र सार -**

इस सूत्र में दर्शाया गया है कि सूक्ष्म रूप होने से पवर्ग क-च-ट-त वर्गों के द्वारा अवबोधित पृथ्वी रूप स्थूल तत्त्वों का कारण है।

## व्याख्या

देहाभिमान रूपिणी प्रकृति क-वर्ग रूप पृथ्वी का आन्तरिक स्वरूप है। च-वर्ग रूप सलिल का आन्तर रूप अहङ्कार है। ट-वर्ग रूप अग्नि का आन्तर रूप बुद्धि है तथा त-वर्ग रूप अनिल का अन्तरात्मा मन है। इस प्रकार प-वर्ग वर्ण-चतुष्टय प्रकृति से उद्भुत संसार है। अर्थात् पृथ्वी, अहङ्कार, बुद्धि तथा मन सूक्ष्म प्रकृति की उत्पत्ति हैं, एवं क-च-ट-त वर्गों के द्वारा अवबोधित पृथ्वी, जल, अग्नि तथा वायु-तत्त्वों की कारण भी सूक्ष्म प्रकृति है। अर्थात् सूक्ष्म प्रकृति रूप संसार का स्थूल भाव पृथ्वी-संसार है। प्राकृतिक संसार का पर्यायभूत ब्रह्माण्ड पृथ्वी पर्यन्त तत्त्वों का मूल है तथा माया का विलास प्रकृति पर्यन्त है।

इसका तात्पर्य है कि श्रीचक्र में मन, बुद्धि, अहङ्कार तथा प्रकृति का अभिव्यञ्जक चतुरस्र रवि का बिम्ब है, एवं ज्ञानेन्द्रिय, कर्मेन्द्रिय, पञ्चतन्मात्रा एवं पञ्च तत्त्वों का अभिव्यजक दशार-द्वय रवि की रश्मियों का चक्र है।

## षष्ठं सूत्रम्

**देहात्मनोः प्रकृति पूरुषयोः प्रमाता**
**देहोऽत्र तस्य निलयोऽपि तदङ्गमात्मा।**
**आत्मा यता भवति मातृपदं वपुश्चेत्**
**तल्लीनमस्त्यविरहः शिवयोः स्वभावः॥६॥**

## व्याख्या

**इदानीं प्रकृत्यण्डमारभते देहात्मनोरित्यादि। देहात्मनोर्देहात्मपर्याययोः प्रकृति पुरुषयोर्मध्ये अत्र विसर्ग प्रकरणे देह प्रमाता तस्य देहस्य निलयोऽपि आश्रयोऽपि अपि शब्देनाङ्गित्व संभावना प्रतीयते। देहस्य विमर्शतत्व परिणाम**

**रूपस्य आत्मनः प्रकाशं बिना न कुत्रापि स्थिति रुपपद्यते। धर्मस्य धर्मिण्येवाश्रयणमिति नियमात्। आत्मा तदङ्गं तस्य देहस्याङ्ग तदन्तर्गतत्वेन तदङ्गत्वम् विसर्ग प्रमातृ देहस्य प्रकृति पर्यायस्य व्याप्तौ आत्मा तदन्तर्गतः सन् तदङ्गतां भजते। यथा आत्मा प्रमातृ पदं प्रमातृस्थानं भजति आरोहते। तत्र बिन्दु व्याप्ति पदे तल्लीन तस्मिन्नात्मनि लीनमेकरसीभूत वपुः अस्ति सत्तां अवलम्बते न तु परमोच्छेद प्राप्नोति। तथात्वे विमर्शपदस्यापुनरुदयप्रसङ्गात् विमर्शस्य पुनः पुनरुदय प्रकाशव्याप्तावपि विमर्शस्या त्यन्तिकोच्छेदो न संभाव्यते इत्यवधारणीयम्। प्रकाश विमर्शयोरितरेतर व्याप्तौ उभयोरप्यनुच्छेद प्रतिपादयति अविरहः इति। शिवयोः शिवाचशिवश्चशिवौ तयोः शिवयोः अविरहः अन्योन्याविनाभावा स्वभावः नैसर्गिक इत्यर्थः। प्रकाशं विना विमर्शोऽपि न विमर्श विन प्रकाशोऽपि न, किन्तु प्रकाश व्याप्तौ विमर्शस्य प्रकाशैकरस्येन स्थितिः, विमर्श व्याप्तौ प्रकाशस्य भिन्न रसत्वेनैवस्थितिरिति विभागः।।६।।**

## भाषा टीका

**सूत्र सार -**

इस सूत्र में प्रकृति-अण्ड के विवरण का प्रारम्भ करते हैं।

### व्याख्या

देह तथा आत्मा के पर्यायवाची क्रमशः प्रकृति तथा पुरुष हैं। विसर्ग दशा में देह प्रमाता है अतः आत्मा उसका अङ्ग है।

प्रकाश-रूप आत्मा के बिना विमर्श-तत्त्व की परिणाम-रूप देह का अस्तित्व सम्भव नहीं है; तथा नियम है कि धर्म का आश्रय धर्मी होता है; अतः यद्यपि आश्रयभूत होने के कारण आत्मा अङ्गी है तथा देह अङ्ग है, तथापि यहाँ विसर्ग व्याप्ति में देह ही प्रमाता होने से अङ्गी अर्थात् धर्मी है तथा देह के अन्तर्गत व्याप्त होने से आत्मा उसका अङ्ग है।

बिन्दु व्याप्ति में आत्मा जब प्रमाता का स्थान ग्रहण करता है, तब देह का आत्मा के अंतर्गत एकरस लय हो जाता है। तथा देह आत्मा के अंतर्गत समान सत्ता को प्राप्त हो जाती है। देह का आत्यन्तिक विनाश नहीं होता है। क्योंकि देह का परम विनाश स्वीकार करने से विमर्श के पुनः उदय का प्रसङ्ग समाप्त हो जाता है, किन्तु प्रकाश की व्याप्ति में विमर्श के पुनःपुनः दर्शन

होते हैं, अत: प्रकाश-व्याप्ति में भी विमर्श का आत्यन्तिक उच्छेद नहीं होता। प्रकाश तथा विमर्श की अन्योन्य अर्थात् परस्पर एक की दूसरे में व्याप्ति होती है अत: दोनों का ही आत्यन्तिक उच्छेद सम्भव नहीं है। यही सिद्धान्त है।

शिव तथा शक्ति का अविरह स्वभाव है, अर्थात् दोनों का अविनाभाव सम्बन्ध नैसर्गिक है। प्रकाश के बिना विमर्श की सत्ता नहीं है तथा विमर्श के बिना प्रकाश की सत्ता नहीं है। दोनों में इतना ही अन्तर है कि प्रकाश की व्याप्ति दशा में विमर्श प्रकाश के साथ एकरस हो जाता है; किन्तु विमर्श की व्याप्ति में प्रकाश भिन्न रस के रूप में व्याप्त रहता है।

## सप्तमं सूत्रम्

जाड्यादहंकृतिरितिप्रथतेविमर्शो
बुद्धिजडाजडतया मनस्त्वजाड्यात्।
त्रैगुण्यमेतदबहिः करणत्रयं स्यात्
सौषुप्तजाग्रदवशेषदशानिदानम्।।७।।

### व्याख्या

**एवं धर्मिणोः देहात्मनोः स्वरूपं विचार्य इदानीं अहङ्कार बुद्धि, मनो रूपेण त्रिविधस्य विमर्शादभिन्नस्य धर्मस्यस्वरूपंपरामुशति। जाड्यादित्यादि। विमर्श जाड्यात् जडत्वभूमिका परिग्रहात् अहंक्रितिरितिप्रथते प्रसिद्धो भवति। जडत्व भूमिका परिग्रहे विमर्शएवाहंकार शब्देन व्यवहियते इत्यर्थः। देहेऽहमितियोऽयं विमर्शः स एव जड; विमर्शोऽहङ्कार। जडभूतदेहाश्रितत्वेन तद्धर्मत्वात् अयमेव जडविमर्शोऽन्तःकक्ष्यायामहङ्कारः सन् देह धर्म वहिः कक्ष्यायां शब्दादिपञ्चकरूपः सन् भूत चतुष्टयाङ्काया पृथिव्याः अङ्गिनन्याधर्मः। अथ विमर्शएवजडाजडत्व भूमिका परिग्रहे बुद्धिरितिव्यवह्रियते। इत्याह बुद्धिर्जडा जडतयेति। क्रिया साधनमिन्द्रियं स्वयमपिस्थौल्ययेन क्रियारूपत्वाज्जडंच स्वत एव स्पन्दमानत्वादजडञ्च अतः क्रिया साधन रूपेण जडाजडो विमर्शः अन्तः कक्ष्यायां बुद्धिरित्युच्यते। बहिः कक्ष्यायां वागादि पञ्चकमुच्यते। अथविमर्श एव अजडत्व भूमिका परिग्रहेण मन इत्युच्यते। विमर्शस्याजडत्वं ज्ञानसाधनरूपेण। ज्ञानसाधनं खलु मनश्चक्षुरादिकमन्तर्बहिः कक्ष्याविभक्तंसूक्ष्मरूपतया बुद्धिवागादि विलक्षण पदं जडमेव। एवं विमर्श रूपमहङ्ककाराद्यन्त करण त्रयमेव गुणत्रयमित्याह।**

**त्रैगुण्य मिति। एतद्बहिःकरणत्रयं अन्तःकरणत्रयत्रैगुण्यं सत्त्वादित्रिगुण समाहारः स्यात्। अहङ्कारोरजोगुणः उत्पत्तिरूपत्वात् बुद्धिः सत्वं स्थिति रूपत्वात्। मनस्तमो गुणः संहाररूपत्वात्। चिदेकाकारता खलु संहारः प्रकाश विश्रान्तिरूपो लौकिकैस्तम इत्युच्यते। तदस्य मनसो लौकिकापेक्षयैव तमस्त्वम्। अथवा क्रियायाः संहारपक्षे क्रिया रूपोऽहङ्कारस्तमः। ज्ञानरूपं मनोरज। अजडत्वं जगदुत्पत्तिदशा। जडत्वं तत्संहारः इतिलौकिकः पक्षः। जडत्वं जगदुत्पत्तिदशा, अजडत्वंसंहारेति योग सिद्धान्तः। अतो यथा विवक्षितं जडाजडयोरहंकार मनसोस्तमो रजोगुणयोर्योजना कर्तव्या। अथैतद्देहान्तः करणत्रयं सुप्त्यादि दशत्रयबीजमित्याह। सौषुप्तेति। सुषुप्तिरेवसौषुप्तम्। सुषुप्तिजापद्भ्यामवशेषदशा स्वप्नः। अहङ्कारो जडत्वात्सुषुप्तिनिदानम्। बुद्धिर्जजडाजडतया जाग्रन्निदानम्। मनस्त्वजडतया स्वप्ननिदानमिति विवेकः।।७।।**

# भाषा टीका

## सूत्रसार -

देहात्मक धर्मी के स्वरूप का निर्धारण करने के पश्चात् इस सूत्र में विमर्श से अभिन्न त्रिविध धर्म-अहङ्कार, बुद्धि तथा मन के स्वरूप का निरूपण करते हैं।

## व्याख्या

विमर्श का जडता के परिग्रहण से अहङ्कार, जडाजडता के परिग्रहण से बुद्धि तथा अजडता के परिग्रहण से मन, नामों से उल्लेख किया जाता है। विमर्श के यह तीनों आन्तरकरण त्रिगुणात्मक हैं; अतः सुषुप्ति, जाग्रत् एवं स्वप्नावस्थाओं के बीज कारण हैं।

जड-भूमिका ग्रहण करने के कारण विमर्श की अहङ्कार नाम से प्रसिद्धि होती है। देह-प्रमाता में अहं रूप विमर्श जड देह पर आश्रित होने से उसका धर्म है; अतएव वह स्वयं भी जड है। इसी कारण से देह का धर्मभूत विमर्श अन्तःकक्षा में अहंकार नाम से कहा जाता है तथा बहिःकक्षा में शब्द, स्पर्श, रूप, रस तथा गन्ध के रूप में अङ्गिनी-रूप पृथ्वी का धर्म हो जाता है।

वही विमर्श जडाजडत्व-भूमिका ग्रहण करने पर बुद्धि नाम से कहा जाता है। क्रिया की साधनभूत कर्मेन्द्रियाँ स्थूलता के कारण स्वयं ही क्रिया-रूप होने से जड हैं, तथा स्वतः स्फुरित होने के कारण अजड भी हैं। अतएव

क्रिया के साधन-भूत विमर्श का अन्तःकक्षा में बुद्धि के नाम से तथा बाह्यकक्षा में वाक् आदि कर्मेन्द्रियों के नाम से कथन किया जाता है।

विमर्श जब अजड-भूमिका ग्रहण करता है, तब मन नाम से कहा जाता है। ज्ञान का साधन होने से मन अजड है। आन्तर तथा बाह्यकक्षा में विभक्त ज्ञान का साधन-भूत मन एवं चक्षु आदि ज्ञानेन्द्रियां सूक्ष्म रूप में, बुद्धि आदि से विलक्षण, अजड हैं। इस प्रकार विमर्श-रूप अहंकार आदि तीन अन्तः करण ही सत, रज, तम तीन गुणों का समाहार हैं।

उत्पत्ति-रूप होने से अहंकार रजोगुण, स्थिति-रूप होने से बुद्धि सत्वगुण, तथा संहार-रूप होने से मन तमोगुण है। चिद् रूप में एकाकारता का नाम संहार है। प्रकाश तथा विश्रान्ति रूप संहार को लौकिक व्यवहार में तमोगुण कहा गया है। अतः लौकिक व्यवहार की अपेक्षा से मन तमोगुण है।

यदि संहार तात्पर्य क्रिया के संहार से है, तब क्रिया-रूप अहंकार तम, ज्ञान-रूप मन रज सिद्ध होता है। जगत् की उत्पत्ति दशा को अजड तथा संहार को जडत्व मान्य करना केवल लौकिक पक्ष है। इसके प्रतिकूल जगत् की उत्पत्ति दशा जड, तथा संहार-दशा अजड है, ऐसा योग का सिद्धांत है। अतएव उपर्युक्त कथन के अनुसार जडरूप अहंकार तम तथा अजड-रूप मन रजोगुण हैं। अतः अन्तःकरण त्रय को सुषुप्ति आदि अवस्थाओं का बीज कहा गया है। जड होने के कारण अहंकार सुषुप्ति का बीज है, जडाजड होने से बुद्धि जाग्रत् अवस्था का बीज है तथा अजड होने से मन स्वप्न-दशा का बीज है।

## अष्टमं सूत्रम्

देही गुणत्रयमयप्रकृतिर्दशासु
सुप्त्यादिकासु नियमात्परिबंभ्रमीति।
तास्वप्यहङ्कृतिपुरःसरणात्त्रिपुट्यां
मेयोन्नतिं कलयति प्रमुखः क्रियांशम्।।८।।

### व्याख्या

**इदानीं देहिनो गुणत्रयमय प्रकृति योगेन सुप्त्यादिदशात्रये परिभ्रमणमित्याह देहीति। देहीदेहाभिमानी प्रमाता गुणत्रयमय प्रकृतिः गुणत्रय संसृष्टि रूपिणी प्रकृतिः। स्वभावो देहपर्यायो यस्यतथोक्तः। एतेन गुणत्रय संसृष्टिरेव प्रकृतिरिति**

**प्रकृति लक्षणमुक्तम्। एवं रूप प्रकृतिर्जीवः सुप्त्यादिकासु दशासु सुषुप्ति जाग्रत् स्वप्नेषु नियमादव्यभिचारेण परिबंभ्रमीति पुनः पुनर्भ्रमति। तास्वपि दशासुरहङ्कृति पुरःसरणात देह धर्मस्याहङ्कारस्य प्राधान्यात्। त्रिपुट्यां प्रमातृ प्रमाण प्रमेय रूपायां संसार कलाप संपुटिकायां मेयोन्नतिं प्रमेय व्याप्ति प्रमुख क्रियांश प्रधानः क्रियांशो यस्यास्मिन्कर्मणि तथा कलयति विमृशति। देहस्य प्रमातृत्वे तद्धर्मस्य विमर्शस्य जडत्वाज्जड पक्ष्यस्य प्रमेयस्य व्याप्त्यनुसंधानं भवतीत्यर्थः।।८।।**

## भाषा टीका

### सूत्रसार -

इस सूत्र में दर्शाया गया है कि त्रिगुणमय प्रकृति के योग से प्राणी सुषुप्ति आदि तीन अवस्थाओं में परिभ्रमण करता है। त्रिगुणमयदेहाभिमानी प्रमाता जीव सुषुप्ति, जाग्रत् तथा स्वप्नावस्थाओं में नियम से भ्रमण करता है। त्रिगुणात्मकता ही प्रकृति शब्द की परिभाषा है।

### व्याख्या

सुषुप्ति आदि तीनों अवस्थाओं में अहङ्कार ही प्रधान है अतः प्रमातृ-प्रमाण-प्रमेय रूप त्रिपुटी में क्रिया की प्रधानता से यहाँ प्रमेय की ही उन्नति अर्थात् प्राधान्य कहा है। अर्थात देह-प्रमातृत्व में उसके धर्मभूत विमर्श के जडत्व के कारण प्रमेय की व्याप्ति का अनुसन्धान होता है।

तात्पर्य यह कि गुणत्रय की संसृष्टि में सुषुप्त्यादि तीनों अवस्थाओं में अहंकार का प्राधान्य है। अतएव प्रमातृ आदि रूप संसृष्टि में क्रियांश की प्रधानता के कारण प्रकृति में प्रमेय की व्याप्ति का ही अनुसन्धान होता है।

## नवमं सूत्रम्

**मेयादिका सतत युक्त्रिपुटी मनस्तां**
**मेयादि भासयति मूढमहङ्क्रियात्म।**
**मात्रादि भासयति चाथ निजस्वभावाद्-**
**बुद्धिश्च मध्यमपदे मन एव बोध्यम्।।९।।**

## व्याख्या

इदानीं सर्वस्यान्तःकरणस्य मन एव प्रमाणभूतम् मनस एवाहङ्कारदयोभूमिकाः मनसो विमर्श प्रथम रूपत्वात् विमर्शवैभवं मनोवैभवमिति व्युत्पादयति। मेयादीति। मेयादिकाः मेय, मान मातृरूपा त्रिपुटी त्रयाणां मेयादि पुटानां समाहारस्त्रिपुटी सततयुक् अन्योन्याविनाभास्वभावा तां त्रिपुटी मनः विमर्शस्य मूलरूपं। मूढं जाड्य पर्यायमौढ्यभूमिका परिग्रहेण अहङ्क्रियात्म अहङ्कारस्वरूपं सत्। मेयादिभासयति। प्रमेयादिकं यथा तथा भासयति। मेय व्याप्तिं दर्शयतीत्यर्थः। मनस एवानुसंधानमहङ्कार आरोप्यत इत्यर्थः। अथ तदेव मनः निजस्वभावादजडरूपात् अजडरूपंनिजस्वभावं परिगृह्यइत्यर्थः तां त्रिपुटीमित्यनुवर्तते। मात्रादिभासयति प्रमात्रादिकं यथा तथा भासयति। चित्प्रमातृ व्याप्तिं दर्शयतीत्यर्थः। मन एव मध्यमपदे जडाजड समानपदे। जडाजड पद परिग्रहेण इत्यर्थ। बुद्धिश्च प्रमेय प्रमात्रोः समव्याप्ति प्रदर्शिका बुद्धिश्च मन एवैति बोध्यम्।।९।।

# भाषा टीका

### सूत्रसार -

इस सूत्र में दर्शाते हैं कि समस्त अन्तःकरण का प्रमाण मन है। अहंकार आदि की भूमिका में विमर्श का प्रथम रूप मन है अतः विमर्श का समस्त वैभव मनोमय है।

## व्याख्या

मेय-मान-मातृ रूप त्रिपुटी में मन जब विमर्श की मूलरूप जाड्य भूमिका को ग्रहण करता है तब अहङ्कार नाम से व्यवहृत होता है; तथा प्रमेय आदि के स्वरूप को भासित करता है अर्थात प्रमेय व्याप्ति को प्रदर्शित करता है।

वही मन जब अपने स्वभाव के अनुसार अजड रूप को ग्रहण करता है; तब त्रिपुटी को प्रमाता के रूप में भासित करता है। अर्थात् चित् प्रमातृ-व्याप्ति को दर्शाता है। अर्थात् प्रमाता के रूप में चिद् व्याप्ति को दर्शाता है।

जडाजड मध्यम पद का ग्रहण करने पर वही मन बुद्धि नाम से कहा जाता है। यह मिश्रित रूप से प्रमेय तथा प्रमाता की व्याप्ति दशा है। अर्थात्

बुद्धि भी मन है। इस प्रकार विभिन्न भूमिकाओं में मन ही अहङ्कार एवं बुद्धि के रूप में प्रदर्शित होता है।

## दशमं सूत्रम्

तस्मात्पकार वपुषः प्रकृतेः प्रमातु-
रात्मा मकारवपुरन्तर एव लीनः।
तन्मध्यतः स्थितिरहङ्कृतिधी हृदांस्या-
देतत्प्रमातृपदमिन्द्रियलग्नविश्वम् ॥१०॥

### व्याख्या

**उक्त प्रमेयं कारणीकृत्य पवर्गप्रकृत्यादितत्वसन्निवेषं दृढीकृत्योपदर्शयति तस्मादिति। तस्मात्पूर्वोक्तप्रमेयरूपात्कारणात् पकार वपुषः पकार प्रतिपाद्यायाः प्रकृतेः। पकार वपुषः पकार स्वरूपायाः इत्युपचारः। प्रमातुः देहपर्यायप्रकृतिरूपस्य प्रमातुः। अन्तर एव व्याप्यपद एव। मकारवपुर्मकार स्वरूपः। अत्राप्युपचारः। आत्मा पुरुषः लीनः व्याप्तः इत्यर्थः। तन्मध्यतः तयोर्प्रकृति पुरुषयोर्मध्यभागे अहङ्कृतिधीहृदां अहङ्कार बुद्धिमनसां स्थितिः सन्निवेशः स्यात्। यद्यपि मकारस्यात्मनो व्यापक (क) वर्गे प्रमातृपदे सन्निवेशः तथापि प वर्ग व्यापक वर्गयोर्मध्ये सन्निवेशादुभयपक्ष प्रक्रिया संबंधोवेदितव्यः। स्पर्श कदंबकस्य प्रमाणपदत्वांमकारस्य प्रमातुस्तत्प्रकाशानुसारेण परिगणना। तथापि प्रमाणपदक्रियासम्बन्धमात्रं ताटस्थ्यादङ्गी कर्त्तव्यमेव। अतः प्रकृतिव्याप्तिः पुरुष पर्यन्तं प्रवहतीति निरवद्यम्। चतुरस्त्र चक्र सन्निवेशे तु मनोबुद्ध्योरेवात्म पुरुष रूपयोरहङ्कार प्रकृतिभ्यां व्याप्तिस्ताभ्याञ्चं तदुभय व्याप्तिरिति विवेकः। अथैतस्मिन्नेव प्रकृत्यन्ते मनो बुद्ध्योः स्वप्नपद इव ब्रह्माण्डोन्मीलन चमत्कारं दर्शयति। एतदित्यादि। एतत्प्रमातृपदम् प्रकृत्यन्तम् इन्द्रियलग्न विश्वम् मनो बुद्धि रूपज्ञानक्रियेन्द्रियसम्बद्ध विश्वम् भवतीति शेषः।।१०।।**

### भाषा टीका

**सूत्रसार -**

पूर्वोक्त सूत्र के अनुसार मन को कारण-रूप स्वीकार करके इस सूत्र में प-वर्ग द्वारा अवबोधित प्रकृति आदि तत्त्वों का स्पष्ट विवेचन करते हैं।

## व्याख्या

पूर्व-सूत्र में प्रतिपादित सिद्धान्त के कारण से म-कार स्वरूप आत्मा (पुरुष) प-कार द्वारा अवबोधित प्रकृति रूप प्रमाता के अन्तर्लीन रहती है। प्रकृति एवं पुरुष के मध्य में अहङ्कार, बुद्धि एवं मन का सन्निवेश है।

यद्यपि म-कार रूप आत्मा का व्यापक वर्ग में प्रमाता के रूप में सन्निवेश है, तथापि म-कार की प-वर्ग एवं व्यापक वर्ग के मध्य में स्थिति होने के कारण म-कार उभयात्मक है अर्थात् म-कार रूप आत्मा का प्रमाता तथा प्रमेय दोनों वर्गों से सम्बन्ध है। स्पर्श वर्ण समूह प्रमाण-पद हैं, अतः उसके प्रकाश के अनुरूप यद्यपि मकारात्मक प्रमाता की गणना होती है; तथापि तटस्थता के कारण (अर्थात् स्पर्श एवं व्यापक वर्ग के मध्य म-कार की स्थिति के कारण) आत्मा का प्रमाण-पद से क्रिया-सम्बन्ध मात्र स्वीकार करना उचित है। अतः प्रकृति की व्याप्ति केवल म-कार पर्यन्त प्रतिपादित करना युक्ति युक्त है। मकारात्मक पुरुष को प्रकृति-रूप मान्य करना उचित नहीं है। चतुरस्त्र चक्र में सन्निवेश होने से अहङ्कार एवं प्रकृति के द्वारा आत्म-रूप मन एवं बुद्धि की व्याप्ति होती है आत्मा-रूप पुरुष की नहीं, यह निश्चित है। तथा मन एवं बुद्धि के द्वारा अहङ्कार एवं प्रकृति की व्याप्ति होती है।

इस प्रकार प्रकृति पर्यन्त, स्वप्न पद के समान, मन, बुद्धि के द्वारा ही ब्रह्मांड के उन्मीलन का चमत्कार होता है। अतः यह प्रमातृ-पद प्रकृति पर्यंत है। इंद्रियों से संलग्न विश्व केवल मन बुद्धि रूप ज्ञानेंद्रियों एवं कर्मेंद्रियों सेसम्बद्ध है।

# एकादशं सूत्रम्

**एतच्च मातृपदमिन्द्रिय संसृतञ्च**
**तत्संश्रयश्च मन एव तदिन्द्रियंस्यात्।**
**तद्ग्रामणीन्द्रिय कुलस्य विमर्श शक्ति-**
**श्चिच्चैत्य मिश्रमखिलं खलु तद्विलासः।।११।।**

## व्याख्या

**अथ यदेतदन्तरवाह्य जगद्विलसितं तत्सर्व मनो मूलमेवेति प्रतिपादयति एतच्चेति। एतच्च मातृपदं प्रकृत्यन्तरूपे प्रमातृपदं इन्द्रिय संश्रितञ्च मनो**

बुद्धिरूपेन्द्रिय विलासत्वात्तत्संश्रितं तयोर्मनो बुद्धयोः संश्रित तत्संश्रयश्च तयोर्मनो बद्धयोसंश्रयः आश्रयश्च एतद्वय निजसमाश्रयमेव कुर्वन्नित्युक्तत्वात्। तद्विरूपमिन्द्रियमपि पर्यालोचनायां मन एव स्यात् मनस एव दशा विशेषो बुद्धिरित्युक्तत्वात्। इन्द्रिय कुलस्य अन्तर्बाह्य करण जालस्य ग्रामणि प्रवर्त्तकं तन्मनः विमर्शशक्तिः विचित्र विश्वोद्वमनानुचर्वणक्रिया स्फुरणोन्मेष सम्प्रभा विमर्श शक्तिः मन एव चिच्चैत्य मिश्र प्रमातृप्रमेयप्रमाणरूपमखिल तद्विलासः तस्य मनसो विलासः खलु। तेनेयमिन्द्रियजालश्रीर्जाग्रर्तिप्रविलसत इति प्रसिद्धिः।।११।।

## भाषा टीका

### सूत्रसार -

जगत् का आन्तर एवं बाह्य समस्त विलास मनोमूलक है।

### व्याख्या

जाग्रत् अवस्था में प्रकृत-प्रमाता का आश्रय इन्द्रियाँ हैं, कारण यह कि प्रमाता की करण-भूत मन तथा बुद्धि के विलास का आश्रय भी इन्द्रियाँ हैं; अतएव दोनों रूपों में इन्द्रियाँ मन ही हैं। बाह्य एवं अन्तः करण-रूप इन्द्रियों के समूह का प्रवर्तक मन ही है। विचित्र विश्व की सृष्टि तथा संहार की कारण-भूत विमर्श-शक्ति के उन्मेष तथा निमेष का कारण मन ही है। इस प्रकार प्रमाण, प्रमेय तथा प्रमाता रूप विश्व मन का ही विलास है। मन से ही इन्द्रिय जाल का विलास जाग्रत् अवस्था में होता है।

## द्वादशं सूत्रम्

स्वप्ने च जागरणमातृपदे च वेद्य-
मिच्छात्मनोमनसएवविभातिकुक्षौ।
पूर्वत्र मातृमनएवशरीरताभाक्-
प्रत्यक्षमुत्तरपदे तु शरीरमेव।।१२।।

### व्याख्या

एवं स्वप्नप्रकृति संसारयोर्विश्वमिच्छात्मनो मनस एव गर्भे विलसतीतिप्रबोधयति। स्वप्ने चेति। स्वप्ने च जागरणमातृपदेजाग्रदवस्थायां

यन्मातृपदभवैकारिकं पवर्गप्रतिपाद्यप्रकृतिसंसाररूपमित्यर्थः तस्मिंश्चवेद्यं अन्तर्वहिः- प्रपञ्च रूपम्। इच्छात्मन इच्छारूपस्य मनसः कुक्षावेव गर्भ एव विभाति विलसति। स्वप्नप्रकृतिसंसाराविच्छासंसारामित्यर्थः। ज्ञाने ज्ञानेन्द्रियकर्मेन्द्रिय संसारौ ज्ञान क्रिया संसाराविति भावः। ननु स्वप्नस्य ज्ञान स्वरूपस्य मनः संसारत्वं जाग्रतः क्रिया संसारत्वं विश्रान्ति रूपाया सुषुप्तेरिच्छा संसारत्वमितिप्रागुपदिष्टम्। इदानीं कथमन्यरूपोपदेश इति न मन्तव्यम्। विश्रान्तेरेव बहिर्मुखतायामिच्छा संसारः स्वप्न एव ज्ञानसंसारः जाग्रदेव क्रियासंसारः, जडविश्रान्तिरजडविश्रान्तिश्चेति सुषुप्ति स्वप्नयोर्जडाजड-विश्रान्त्यर्भिमाने जाग्रत् एव ज्ञान क्रियेन्द्रिय व्यापार व्यवस्थायाः ज्ञानक्रियासंसारत्वम्। अथवा प्रकृति संसारस्य ज्ञान संसारत्वं पार्थिव संसारस्य क्रिया संसारत्वं जडाजडरूपसुषुप्तिरेव जडाजडेच्छा संसारत्वाभिमाने स्वप्नो ज्ञान संसारः जाग्रत् क्रिया संसार इति विवेकः। तदत्र स्वप्न विश्रान्तेरजडेच्छा-संसारत्वाभिमाने स्वप्नवन्मानसिक संसारत्वात् प्रकृति संसारस्यापि इच्छासंसारत्वमुक्तमिति निरवद्यम्। स्वप्न प्रकृति संसारयोरिच्छासंसारत्वेन ऐक्यरूप्ये प्राक्प्रतिपादितमेवभेदकमुद्घाटयति पूर्वत्रेति। पूर्वत्र स्वप्ने शरीरताभाक् मन एव मातृप्रमातृ-उत्तरपदे प्रकृति संसारे तु प्रत्यक्षमानसिकत्वेनाभिमत शरीरमेव प्रमातृ अनयोः संसारयोरयमेवेत्यर्थः।।१२।।

## भाषा टीका

### सूत्रसार-

स्वप्न तथा जाग्रत प्रमातृ-पद में इच्छात्मक मन के अन्तर्गत विश्व का विलास होता है। स्वप्नात्मक प्रमाता पद में मन को ही शरीर के रूप में मान्य किया गया है तथा जाग्रत् में मानसिकता प्रत्यक्ष होने के कारण शरीर ही प्रमाता है।

## व्याख्या

स्वप्न एवं जाग्रत् अवस्था में अवैकारिक प्रमातृ-पद में (अर्थात् प-वर्ग द्वारा प्रतिपाद्य प्रकृति संसार में) अन्तः एवं वहिः प्रपञ्च (विश्व) इच्छात्मक मन के अन्तर्गत ही विलसित होता है। अर्थात् स्वप्नात्मक एवं प्रकृति-संसार का संसरण इच्छात्मक है। ज्ञानात्मक स्थिति में ज्ञानेन्द्रियों एवं कर्मेन्द्रियों द्वारा भावित-संसार क्रमशः ज्ञान-संसार एवं क्रिया-संसार के नाम से कहा जाता है।

पूर्व में प्रतिपादित किया है कि ज्ञान-स्वरूप स्वप्न अवस्था में संसार मनोमय है, जाग्रत् में क्रियामय एवं विश्रान्ति-रूपा सुषुप्ति में इच्छामय है। इस

सूत्र में उक्त सिद्धान्त के प्रतिकूल स्वप्न एवं जाग्रत् अवस्था-गत संसार को इच्छात्मक प्रतिपादन करना शङ्कास्पद है।

टीकाकार इस शङ्का का निराकरण करते हैं। सुषुप्ति अर्थात् विश्रान्ति के बर्हिमुख संसरण का कारण इच्छा है, अतः यह इच्छा-संसार कहा जाता है। स्वप्न ज्ञान-संसार है तथा जाग्रत् क्रिया-संसार है। विश्रान्ति के दो रूप हैं-जड़ विश्रान्ति तथा अजड विश्रान्ति। सुषुप्ति में जड एवं स्वप्न में अजड विश्रान्ति की अनुभूति होती है तब केवल जाग्रत अवस्था ही शेष रह जाती है जिसको ज्ञानेन्द्रियों एवं कर्मेन्द्रियों के व्यापार की व्यवस्था के कारण ज्ञान-क्रिया रूप संसार कहा जा सकता है। विकल्प में इस प्रकार कह सकते हैं कि प्रकृति-संसार अवैकारिक होने से ज्ञान-संसार है एवं पार्थिव संसार क्रिया-संसार है। जडाजड सुषुप्ति में जडाजड इच्छा रूप संसार की अनुभूति होने से स्वप्न ज्ञान-संसार तथा जाग्रत् क्रिया-संसार है। यहाँ स्वप्नात्मक विश्रान्ति में अजडात्मक इच्छा-संसार की अनुभूति होती है, स्वप्न मानसिक संसार है अतः उसी के समान ही प्रकृति-संसार मानसिक होने के कारण इच्छात्मक सिद्ध होता है। अतएव यह सिद्धान्त निरवद्य है।

स्वप्न-संसार एवं प्रकृति-संसार इच्छात्मक है, अतः दोनों एकरूप हैं, परन्तु भेद केवल यह है कि स्वप्न में मन को ही शरीर के रूप में मान्य किया गया है अर्थात् मन के अतिरिक्त स्वप्न में प्रमाता का अन्य कोई शरीर नहीं है, किन्तु प्रकृति-संसार में मानसिकता प्रत्यक्ष होने से शरीर ही प्रमाता है।

## त्रयोदशं सूत्रम्

**चेतश्चमत्कृतिपदं वमति स्वलीनं**
**विश्वं वहिः श्रुतिमुखेन्द्रिय वर्ग भावात्।**
**तत्रापि धीन्द्रिय गणः पवनोऽपि पृथ्वी**
**ज्ञेयैर्जलैरपि मरूद्भिरुदीरितोऽन्तः।।१३।।**

## व्याख्या

**पार्थिव संसार प्रक्रियामुपक्रमते चेत इत्यादि। चमत्कृतिपदं चमत्काराणां स्थानं चेतः विमर्शस्य मूलरूपं मनः कर्तृ। स्वलीनं स्वान्तर्गतं, प्रकृति संसारे स्वप्नसंसारइव लौकिकैरपि विश्वस्य मनोविलास मात्रत्वाम्युपगमान्मनो**

निष्ठत्वमिति मनो लीनत्वम् मनः स्वस्वरूप एव विलसदित्यर्थः। विश्वं बहिर्बमति विश्वस्य बहिर्वमनं च मनश्चमत्कार विशेषः। मनसः किं रूपेण बहिर्व-मनमित्यत्राह। श्रुतिमुखेन्द्रिय वर्गभावात्। श्रोतादिवागादि ज्ञानक्रियेन्द्रिय स्वरूपाङ्गीकारात् श्रोत्रादि भूमिका परिग्रहेणेत्यर्थः। श्रोतादिभ्य एव ज्ञेय रूपस्य विश्वस्य निर्गमः। वागादिभ्य एव कार्य रूपस्य नियमेन विश्वस्येन्द्रिय प्रकाशान्तर्भासनादिन्द्रिय कारणत्वं तथा चेन्द्रिय रूपान्तर (त्वं) त्वाद्विश्वस्येन्द्रिय प्रकाशादेव पर्यवस्यति। इन्द्रियप्रकाशोन्मेष एतत्स्फुरणम्। तदनुन्मेषे त्वस्फुरण इत्यन्वयव्यतिरेकाभ्यां विश्वस्येन्द्रियप्रकाशकारणं न तु मायाविमोहितकाणाद-सम्प्रतिपन्न परमाण्वादय इत्यलमतिप्रसङ्गेन। एवं परमार्थादिन्द्रिय प्रकाशोध्वान्तस्यविश्वस्य पशु विषये विपरीत प्रतीत प्रक्रियामाह। तत्रापीति। तत्र बहिः कक्ष्यायां अपि शब्दोऽन्तः कक्ष्या समुच्चयाभिधायकः। यथान्तः कक्ष्यायां प्रकृति संसारे पशोर्विपरीत प्रतीतिः तथा बहिः कक्ष्यायां पार्थिवाण्ड संसारेऽपीत्यर्थः। इन्द्रियगणो ज्ञानेन्द्रिय वर्गः। पव (मा नोऽपि परमार्थ रूपे चिद्व्याप्ते संसारे वायुस्थानकोऽपि पृथिवीस्थानं सङ्कोचभावात्प्राप्तः। ज्ञेयैर्ज्ञेय रूपैः वेद्यैर्जलैरपि चिद्व्याप्तौ जडस्थानकैरपि अत्र विपरीतमरुद्भिः व्याप्त्या वायुस्थानं प्राप्तैः अन्तरुदीरितः स्वाभ्यन्तरेक्षिप्तः व्याप्त इत्यर्थः। तवर्ग रूपाणां ज्ञानेन्द्रियाणां चवर्ग रूपैः शब्दादिभिर्व्याप्तिरित्यर्थः।।१३।।

## भाषा टीका

### सूत्रसार -

इस सूत्र में पार्थिव संसार का विवेचन करते हैं।

### व्याख्या

श्रोत्रादि ज्ञानेन्द्रियों तथा वागादि कर्मेन्द्रियों के स्वरूप को अङ्गीकार कर मन स्वयं, स्वप्न-संसार के समान ही जाग्रत् में अपने अन्तर्गत लीन संसार को प्रकट करता है। अर्थात् विश्व का बाह्य अवस्था में उन्मीलन मन का चमत्कार विशेष है अतः मनोविलास मात्र होने से विश्व की निष्ठा मनोमय कही गई है।

श्रोत्रादि ज्ञानेन्द्रियों से ज्ञेय रूप विश्व का तथा वागादि कर्मेन्द्रियों के द्वारा कार्यरूप विश्व का निर्गम होता है। सिद्धांततः इन्द्रियों के प्रकाश से विश्व का आभास होता है अतः इन्द्रियाँ विश्व का कारण हैं तथा विश्व इन्द्रियों का रूपान्तर है अतः इन्द्रियों का पर्यवसान होने पर विश्व का भी पर्यवसान हो जाता है।

तात्पर्य यह है कि इन्द्रियों के प्रकाश के उन्मेष से विंश्व का स्फुरण होता है तथा इन्द्रियों के प्रकाश का उन्मेष न होने पर विश्व के स्वरूप का स्फुरण नहीं होता है। इस प्रकार अन्वय-व्यतिरेक से विश्व के स्फुरण का कारण इन्द्रिय-प्रकाश है। कणाद द्वारा प्रतिपादित अणु विश्व का कारण नहीं है।

परमार्थतः इन्द्रियों के प्रकाश से उद्ध्वान्त विश्व की पशु दशा में विपरीत प्रतीति होती है। अर्थात् जीवात्मक संसरण में, स्वप्नावस्था के समान ही जाग्रत् में भी, वस्तुतः अन्तः में प्रकटित, मनोमय विश्व इस प्रकार प्रतीत होता है जैसे मन के बाहिर प्रकट हो रहा है।

परमार्थ रूप से संसरण में जब चित् की व्याप्ति होती है तब वायु-स्थान गत पृथ्वी सङ्कोच को प्राप्त हो जाती है, तथा ज्ञेय रूप जल अपने प्रतिकूल तत्त्व वायु के अन्तः में व्याप्त हो जाता है, तथा त-वर्ग द्वारा अवबोधित ज्ञानेन्द्रियों की च-वर्ग रूप तन्मात्राओं में अभिव्याप्ति हो जाती है।

# चतुर्दशं सूत्रम्

**कर्मेन्द्रियाणि कठिनत्वपरान्त भाञ्जि**
**वह्न्याकृतीनि खपदस्थ धराश्रितानि।**
**पृथ्वीमय प्रकृति खग्रहणोन्मुख़ानि**
**बोध्यानि भूत विततेरिहवैपरीत्ये।।१४।।**

## व्याख्या

**इदानीं कर्मेन्द्रियाणां कार्यरूप वेद्यानाञ्च वैपरीत्यमाह कर्मेत्यादि। कर्मेन्द्रियाणि ट वर्ग प्रतिपाद्यवागादीनि कठिनत्व परान्तभाञ्जिकठिनत्वस्य परान्तः परमावधिस्तं भजन्तीति तथोक्तानि क्रियायाः सङ्कोचनिर्वहण पदत्वात् कर्मेन्द्रियाणां कार्यरूप वेद्यानाञ्चातिसङ्कोचभावादतिकाठिन्यं। वह्न्याकृतीनि जडांशप्रधानवह्निमयानि चिद् व्याप्तौ तु कर्मेन्द्रियाणामजडांश प्रधानवह्निमयत्वम्। वन्हेर्जडाजड मयत्वंप्राग्व्याख्यातम्। खपदस्थ धराश्रितानि व्याप्ति लक्षणमाकाशपदमाक्रान्तवर्ती पृथिवीमाश्रितानि। वागादीनां पशुपदेऽपि यद्यपि देह पर्याय प्रकृत्याश्रितत्व तथापि कार्यवेद्य प्रधानभूत पृथिवी व्याप्त्यनु संधानात् पृथिव्याश्रितत्रम्। पृथिवीत्यादि। चिद् ब्याप्ति पदे पूर्णरूपतया च उपचारित**

**रूपिण्याः महापृथिव्या एव पार्श्वे पृथिवी मय्याःप्रकृतेः ग्रहणे व्याप्तौ उन्मुखानि भूत वितेतेरिह वैपरीत्ये बोध्यानि। अत्रायमभिप्रायः पशोर्ज्ञानेन्द्रियाणि ज्ञेयेषु शब्दादिषु किञ्चिदेव ज्ञातुं क्षमन्ते न तु सर्वम्। अतस्तानि तैः ज्ञेयैः व्याप्तानि शब्दादय एव कार्यावस्थायां वचनादि भावेन स्थूलतां प्राप्याकाशादयो भवन्ति। कर्मेन्द्रियाणि च वचनादिमात्रकाशादिकं कर्तुं क्षमन्ते नतु महाभूतरूपमाकाशादि कर्त्तु, अतस्तानि च महाभूतैः कार्यैर्व्याप्तानि। एवं द्विविधमिन्द्रियवर्गं द्विविधेनवेद्य-वर्गेण व्याप्तं सत् आत्मदेहरूपस्य प्रमातृद्वयस्य ज्ञेयकार्य वर्गाभ्यां व्याप्तिं समर्पयति चिद्व्याप्तौ तु आत्मा स्वसाधनैर्ज्ञानेन्द्रियैः ज्ञेयवेद्यं व्याप्नुवन् स्वात्मीकरोति। अशेषज्ञेयस्य स्वात्मीकरणात्सर्वज्ञोभवति। देहश्च स्वसाधनैः कर्मेन्द्रियैः कार्यवेद्यं व्याप्नुवन्तत्स्वात्मीकरोति। विशेष कार्यस्य स्वात्मीकरणात् सर्वकर्त्ता भवतीति ज्ञानक्रियेन्द्रियाणां प्रकृतिविकृति भावप्रक्रियावेदितव्या।।१४।।**

# भाषा टीका

## सूत्रसार -

इस सूत्र में कर्मेन्द्रियों तथा कार्य-रूप वेद्य की विपरीत प्रतीति का कथन किया गया है।

## व्याख्या

क्रिया का स्वभाव संकोचक है, इस कारण ट-वर्ग द्वारा प्रतिपाद्य कर्मेन्द्रियाँ तथा कार्य-रूप विश्व अत्यन्त सङ्कोच-भाव अर्थात् काठिन्य को प्राप्त हो जाते हैं। अर्थात् पशु दया में वह्नि-स्वरूप कर्मेन्द्रियों में वह्नि के जडांश की प्रधानता होती है, तथा चिद्व्याप्ति में अजड अंश की प्रधानता होती है, अतः चिद्व्याप्ति में कर्मेन्द्रियाँ आकाश भाव में परिवर्तित पृथ्वी के आश्रित रहती हैं। पशु-दशा में यद्यपि वागादि कर्मेन्द्रियाँ प्रकृति के आश्रित रहती हैं तथापि पशु दशा में कार्य-रूप पृथ्वी की अनुभूति होती है; अतः कर्मेन्द्रियाँ पृथ्वी के आश्रित ही मान्य की जाती है।

चिद्व्याति में पूर्ण रूप से महा पृथ्वी (आकाश भावस्थ पृथ्वी) के आश्रित कर्मेन्द्रियाँ जब पार्थिव प्रकृति की व्याप्ति की ओर उन्मुख होती हैं तब पञ्चभूतों की विस्तारावस्था में इनकी प्रतीति विपरीत होती है। अर्थात् सूक्ष्म रूप में स्थित कर्मेन्द्रियों का स्वरूप पूर्ण काठिन्यमय हो जाता है।

इसका तात्पर्य निम्न प्रकार है। पशु अर्थात जीव दशा में ज्ञानेन्द्रियों में शब्द आदि ज्ञेय को पूर्ण रूप से जानने की सामर्थ्य नहीं है, अतः ज्ञानेन्द्रियाँ ज्ञेय से व्याप्त हैं। कार्यावस्था में शब्द आदि तन्मात्राओं का ही वचन आदि भाव से स्थूलता में परिवर्तन होकर आकाश आदि के रूप में अविर्भाव होता है। कर्मेन्द्रियाँ केवल वचन आदि मात्र आकाश को प्रकट करने में समर्थ हैं; किन्तु महाभूत-रूप आकाश का स्रजन करने की सामर्थ्य कर्मेन्द्रियों मे नहीं है। अतः कर्मेन्द्रियाँ कार्य-रूप में परिणत महाभूतों से व्याप्त हैं।

इस प्रकार द्विविध इन्द्रियाँ द्विविध वेद्य-वर्ग से व्याप्त होकर ज्ञेय एवं कार्य-वर्ग के द्वारा आत्मा-प्रमाता एवं देह-प्रमाता की व्याप्ति को समर्पित करते हैं। चिद्व्याप्ति में आत्मा अपने ज्ञानेन्द्रियरूप साधनों से ज्ञेय (वेद्य) में व्याप्त होकर अशेष ज्ञेय को आत्मसात् करता है। अतः विशेष कार्य वैद्य को आत्मसात करता है; जिसके कारण आत्मप्रमाता सर्वज्ञता को प्राप्त करता है। देह-प्रमाता अपने कर्मेंद्रिय-रूप साधनों से कार्य-वेद्य में व्याप्त होकर उसको आत्मसात् करने के कारण देह-प्रमाता सर्वकर्तृत्व सामर्थ्य को प्राप्त करता है। ज्ञानेन्द्रियों तथा कर्मेन्द्रियों की प्रकृति एवं विकृति का स्वरूप इस प्रकार प्रस्तुत है।

## पञ्चदशं सूत्रम्

**मानात्मकस्य तरणेर्द्वयतो हि सिद्धिः**
**माया बलात्प्रथमतात्र च मेय कोट्याः।**
**ग्राह्य ग्रहीतृपदवर्ण समन्वयेन**
**योज्याः कलावहिरथान्तरपि क्रमज्ञैः।।१५।।**

## व्याख्या

**अथ प्रमेय प्रमातृ मिश्ररूपस्य प्रमाण सूर्यस्य कला संस्थान प्रक्रियां व्युत्पादयति मानेत्यादि। मानात्मकस्य प्रमाण रूपस्य तरणेः सूर्यस्य द्वयतः प्रमेय प्रमातृभ्यां सिद्धिः स्वरूपलाभो हि। अत्र च माया बलात् प्रमेय कोट्या एव प्रथम पदता प्रमातृ कोट्या द्वितीयपदता विसर्गव्याप्तिरेव प्रथमेत्यर्थः। अत्र प्रमाणसूर्यस्य द्वि द्वि वर्ण प्रतिपाद्यानां कलाना योजने ग्राह्य गृहीतृत्व पदवर्ण समन्वयेन ग्राह्य स्थानकानां वर्णानामनन्तरं ग्राहित्व स्थानकवर्णानां यथा योगं समन्वयेन। बहिः**

कवर्गादि तवर्गान्त रूपे पृथिव्यन्ते अन्तरपि पकारादि भकारान्तरूपे प्रकृत्यन्ते क्रमज्ञैः ग्राह्यग्राहकवर्ण क्रमविद्भिः कला योज्याः। क वर्ग ट वर्ग वर्णानां यथा क्रमं योगः। चवर्ग तवर्गाणाञ्च तथा। प-कार व-कारयोर्योगः फ-कार भ-कारयोश्च तथा एव दशारयुग्मरवेः रश्मिचक्रं चतुरस्त्रं बिन्दुचक्र यत्तु ककारादि डकारन्तैरनु लोम पठित द्रादश वर्णैः भकारादिऽकारान्त विलोम पठित द्वादश वर्णानांयोगेन द्वादशानां सूर्यकलानां प्रकल्पना पारम्पर्य तत्प्रमेय प्रमात्रात्मनः सूर्यस्य स्वरूप भूतेषु चतुविंशति स्पर्शाक्षरेषु अर्ध प्रमेयकोटिरर्धं प्रमातृकोटिरुभय पक्ष समन्वयाद्वादश कला निर्वृत्तिरिति विद्यमानमपि चक्र संस्थानसंवादं न लभत इति। मातृचक्र मर्म विद्भिर्महानुभावै रूपेक्षितमित्यलम्। महामार्गविसंवाद कथया।।१५।।

## भाषा टीका

### सूत्रसार -

सूर्य प्रमाण रूप है : प्रमेय तथा प्रमाता का मिश्रित रूप प्रमाण होता है; अतः सिद्ध हुआ कि प्रमाण रूप सूर्य प्रमेय तथा प्रमाता का मिश्र स्वरूप है। माया वलवती होती है, अतः माया के बल से प्रमाणात्मक सूर्य का प्रथम प्रमेय रूप में दर्शन होता है; अतः प्रमेय की प्राथमिकता है तथा प्रमाता का पद द्वितीय है। इसका तात्पर्य है कि विसर्ग की व्याप्ति प्रथम होती है।

### व्याख्या

यहाँ प्रमाण-रूप सूर्य की कलाओं की योजना का दो-दो वर्णों के द्वारा प्रतिपादन किया गया है, जो ग्राह्य तथा ग्राहक नाम से विभाजित हैं। ग्राह्य-स्थानक वर्णों के पश्चात् ग्राहक-स्थानक वर्णों के योग से सूर्य की कलाओं का कला के रूप में अविर्भाव होता है। अर्थात् वाह्यकक्षा में क-वर्ग से त-वर्ग पर्यन्त पृथ्वी के रूप में तथा अन्तःकक्षा में प-कार से भ-कार पर्यन्त प्रकृति रूप में सूर्य के प्रमेय आदि अंशों की कलाओं का संयोजन है। क-वर्ग तथा ट-वर्ग का एवं च-वर्ग तथा त-वर्ग का यथा क्रम योग है। इसी प्रकार प-कार का ब-कार से तथा फ-कार का भ-कार से योग है। श्रीचक्रान्तर्गत दशारयुग्म इस प्रकार से सूर्य की रश्मियों का चक्र है; तथा सूर्य का विम्ब-चक्र चतुस्त्र द्वारा प्रदर्शित है।

अन्य मत के अनुसार अनुलोम क्रम से पठित क से ड पर्यन्त बारह वर्ण तथा भ से ड पर्यन्त विलोम क्रम से पठित द्वादश वर्ण क्रमशः सूर्य के स्वरूप-भूत प्रमेय-रूप तथा प्रमाता-रूप कलाओं के द्योतक हैं। इस प्रकार चौबीस वर्णों में से आधे द्वादश वर्ण सूर्य के प्रमेयांश के द्योतक तथा शेष बारह प्रमातृ अंश के द्योतक हैं।

किन्तु सूर्य की कलाओं के रूप में विकसित प्रमेयात्मक तथा प्रमातृ-आत्मक चौबीस वर्णों को श्रीचक्र में कोई स्थान नहीं दिया गया है। मातृका-चक्र मर्मज्ञों द्वारा सूर्य के प्रमेय-पद तथा प्रमाता पदों की उपेक्षा की गई है।

## षोडशं सूत्रम्

**मातादशेन्द्रियमयो दशकश्चमेय**
**तन्मेलनाद्दशकलात्मदशारयुग्मम् ।**
**अन्तः कला द्वयमिह प्रकृतौनिलीन**
**स्त्रैगुण्यमातर्रिपुमांश्चतुरस्त्रविम्बे ॥१६॥**

## व्याख्या

**बहिरन्तरपि ग्राह्यगृहीतृपदवर्ण समन्वयेन कलायोज्या इतिपूर्वं सूत्रेणसूचितम्। कलायोजनप्रकारम् चक्रे संस्थाने संवादयन् मातान्तरव्याक्षेपाभित्रायेण स्फुटान्तरमुपदिशति। मातेत्यादि। मातृमेयात्मकौहि रविःमाता च बहिस्तवर्ग टवर्ग प्रतिपाद्य दशेन्द्रियमयः मेयश्च तथा चवर्ग कवर्ग प्रतिपाद्य शब्दाद्याकाशादिक दशकमयम्। तन्मेलनात् यथाक्रमं पृथिव्यादिकार्य वेद्य प्रतिपादक कवर्गाक्षर प्रपञ्चकेन वाय्वादिकर्मेन्द्रिय प्रतिपादक टवर्गाक्षर पञ्चकस्य मेलनात्। तथा गन्धादिप्रतिपादक चवर्गाक्षर पञ्चकेन घ्राणादि प्रतिपादक तवर्गाक्षर पञ्चकस्यमेलनात्। पञ्चपञ्च कलात्मकं सम्भूय दशकलात्मकं दशारयुग्मं भवति। अन्तः पवर्गरूपे प्रमातृपदेकलाद्वयं कार्यवेद्यबीजभूत प्रकृतिप्रतिपादकेन पकारेण कर्मेन्द्रिय बीजभूत बुद्धिप्रतिपादकस्य ब वर्णस्य मेलनादेकाकला. ज्ञेयवेद्य बीजभूताहंकारप्रतिपादकेन फकारेण ज्ञानेन्द्रियबीजभूतमनः प्रतिपादकस्य भकारस्य मेलनादन्याकलेति कलाद्वयमिहचतुरक्षरनिष्पन्न कलाद्वयात्मके चतुरस्त्रबिम्बे त्रैगुण्य मातरि त्रिगुण सवित्र्यां प्रकृतौ पुमान्मकाररूप आत्मा**

**निलीनः। अहङ्कार सहितायां प्रकृतौ बुद्धिमनसोर्यन्निलयनं तत्पुरुषस्य निलयनेपर्यवस्यतीतिभावः। स्पर्श वर्ण चक्रस्य प्रमाणचक्रत्वान्मने बुद्धि रूपेणैव पुरुषस्यात्रचक्रे सस्थानं नतु मकाररूपेण तथापि मनोबुद्धयौः पुरुषस्यैव रूपान्तरत्वात् पुरुषस्यापि मकारस्य प्रमाण प्रमातृचक्रयोर्मध्येवर्त्तित्वादुभय चक्रसम्बन्ध इतिपुमान्निलीन इत्युक्तम्।।१६।।**

## भाषा टीका

### सूत्रसार -

पूर्व सूत्र में ग्राह्य एवं ग्राहक पदों के द्योतक वर्णों के समन्वय से सूर्य की बाह्य तथा अन्तर-कलाओं की योजना प्रस्तुत की गई है। इस सूत्र में सूर्य की इन कलाओं का श्रीचक्र में स्थान तथा प्रकार का स्पष्टीकरण किया गया है, तथा प्रतिपादन किया है कि कलाओं की योजना के द्वारा ही श्रीचक्र में प्रमाता का संकेत किया है; अन्य प्रकार से प्रमाता-पद के चित्रण की आवश्यकता नहीं है।

## व्याख्या

सूर्य प्रमेय तथा प्रमाता का मिश्र-रूप है जिसका श्रीचक्र में दशारयुग्म के द्वारा चित्रण किया गया है। त-वर्ग द्वारा अभिव्यञ्जित ज्ञानेद्रियों तथा ट-वर्ग द्वारा अभिव्यञ्जित कर्मेन्द्रियों के योग से श्रीचक्र में प्रथम दशार का चित्रण है; जो प्रमातृ रूप है। च-वर्ग तथा क-वर्ग द्वारा प्रतिपाद्य पंचतन्मात्रिक एवं पंचभूतात्मक दशक प्रमेयात्मक भाग है जिसका श्रीचक्र में द्वितीय दशार के रूप में चित्रण है। क-वर्ग, च वर्ग, ट-वर्ग एवं त-वर्ग द्वारा अवबोधित दशारयुग्म बाह्य प्रमाता है।

प-वर्ग रूप अन्तःप्रमाता का चित्रण दो कलाओं के द्वारा किया गया है। कार्य-वेद्य अर्थात् प्रकृति के बीज भूत प-कार एवं कर्मेन्द्रियों की बीजभूत बुद्धि के प्रतिपादक ब-कार के योग से प्रथम अन्तःकला का आविर्भाव होता है। ज्ञेय-वेद्य के बीजभूत अहङ्कार के प्रतिपादक फ-कार एवं ज्ञानेन्द्रियों के बीजभूत मन के प्रतिपादक भ-कार के मेलन से द्वितीय अन्तःकला का आविर्भाव होता है। इस प्रकार प-वर्ग के चार वर्णों द्वारा निष्पन्न द्विकलात्मक चतुरस्र विम्ब में त्रिगुणात्मक प्रकृति के अन्तः में म-कार रूप आत्मा निलीन रहता है। अर्थात् अहङ्कार सहित प्रकृति के अन्तः में जो बुद्धि एवं मन का निलय कहा गया

है वह वस्तुतः आत्मा का ही लय है। यद्यपि प्रमाण चक्र का अवबोधक होने के कारण स्पर्श-वर्ण चक्र के अन्तर्गत मन-बुद्धि रूप पुरुष का ही संस्थान है, न कि म-कार रूप आत्मा का; तथापि मन एवं बुद्धि का रूपान्तर पुरुष है, अतएव म-कार द्वारा प्रतिपादित पुरुष की स्थिति प्रमाण तथा प्रमातृ चक्र के मध्य सिद्ध होती है; अतः पुरुष का सम्बन्ध दोनों चक्रों से है। अतएव यहाँ चतुरस्र चक्र में प्रकृति के अन्तः में पुरुष को निलीन मान्य किया गया है।

## सप्तदशं सूत्रम्

मानात्मनैव चिदचित्स्थितिरत्रचक्रे
भेदात्मके न भवतीह विसर्गबिन्दोः।
मस्यानुषक्तिरपि मुख्य समन्वयस्य
बिन्द्वेक भोगपद मातृ पुरोचितस्य।।१७।।

### व्याख्या

**पूर्वसूत्रे सूचितं मकारप्रतिपाद्य पुरुष तत्वस्यैव प्रमाण प्रमात्रोरुभयचक्र सम्बन्ध स्फुटीकरोति मानेत्यादि। अत्र भेदात्मके चक्रे प्रमाण चक्रस्य ग्राह्य गृहीतृ भेदाविनाभावभूमित्वात् दशारयुग्म रूपत्वम्। न तु चतुर्दशाराष्टार बदेकैक चक्रत्वम्। अतो भेदात्मकं प्रस्फुट भेद स्वरूपम्। अत्र प्रमाण चक्रे चिदचितोः प्रमातृप्रमेययोः स्थिति। मानात्मनैव इन्द्रियरूपेणैव इन्द्रियाणां प्रमाण पर्यायाणां ग्राह्य ग्राहकोभय सिद्धरूपत्वात्। ग्राह्यग्राहक रूपेणैव प्रमेय मातृ स्थितिरित्यर्थः। अतः कारणादित्यौचित्यादव्याहर्त्तव्यम्। इह प्रमाणचक्रे विसर्ग बिन्दोरपि सतो भेदमयत्वाद्विसर्गस्य इत्यर्थः। यस्य मकार प्रतिपाद्यस्यपुरुषस्य अनुषक्तिरनुसङ्गो न भवति चतुर्विंशत्यक्षरात्मक द्वादशकलारूपे प्रमाणचक्रे पुरुषस्थानकस्य मकारस्य पञ्चविंशति तमस्य न सन्निवेश इत्यर्थः। तर्हि तस्य मकार पुरुषस्यात्रचक्रे किं सम्बन्धाभाव इत्यत्राह अपि मुख्यसमत्व यस्येति। प्राधान्येन सम्बन्धवतोऽपि प्रमाणचक्रे प्रकृति व्याप्ति विषयत्वेन सम्बन्धवतोऽपि तत्र चक्रे नानुषक्रिर्भवतीत्यन्वयः। कुत इत्याह बिन्द्वेकभोगपद मातृ पुरोचितस्य बिन्दोरेकभोगस्थानम्। अष्टाररूपं प्रमातृपुरं तदुचितस्य द्वौ हि संग्रहेण प्रमातारौ अभेदानुसन्धाता भेदानुसन्धाता च तत्र मकार प्रतिपाद्यो-भेदानुसन्धाता अतः प्रसिद्धप्रमाता मकार प्रतिपाद्य प्रमातृ पुर सन्निवेशमेवार्हति। न तु प्रमाणपुर**

**सन्निवेशम्। तत्र तद्रूपान्तरयोर्मनोबुद्धयोरेव सन्निवेशः सम्बन्धस्तु प्रमाणचक्रेऽपि मकार प्रतिपाद्यस्यास्त्येवेति निष्कर्षः।।१७।।**

## भाषा टीका

## सूत्रसार -

पूर्व सूत्र में म-कार द्वारा प्रतिपाद्य पुरुष का सम्बन्ध प्रमाण एवं प्रमातृ-चक्र से दर्शाया गया है। इस सम्बन्ध की स्पष्ट व्याख्या के लिये यह सूत्र लिखा गया है।

## व्याख्या

प्रमाण-पद में भेदरूप ग्राह्य-ग्राहक की अविनाभाव भूमिका है; अतः प्रमाण-चक्र का स्वरूप दशार-युग्मात्मक है। अर्थात् दशारद्वय को एकात्मक युग्म के रूप में चित्रित किया है। जिस प्रकार श्रीचक्र में चतुर्दशार एवं अष्टार नामक दो पृथक् चक्र हैं, उस प्रकार चित् अचित् अर्थात् प्रमाता तथा प्रमेय को चित्रित करने के हेतु प्रमाण-चक्र में पृथक्-पृथक् सङ्केत नहीं है। प्रमाण की पर्यायभूत इन्द्रियों का ग्राह्य-ग्राहक उभय रूप सिद्ध है; इस कारण प्रमाणचक्र में प्रमेय एवं प्रमाता की स्थिति ग्राह्य-ग्राहक रूप में दर्शाई गई है।

प्रकृति व्याप्ति का विषय होने से यद्यपि मकार का प्रमाण चक्र से प्रधान सम्बन्ध है तथापि इसमें मकार प्रतिपाद्य पुरुष की अनुशक्ति नहीं है। अर्थात् चौबीस अक्षरों से गठित द्वादश कला रूप प्रमाण-चक्र में पचीसवाँ अक्षर म-कार का सन्निवेश नहीं है। तब प्रश्न होता है कि म-कार का प्रमाण-चक्र से किस प्रकार सम्बन्ध है?

विन्दु प्रमाता का श्रीचक्र में अष्टार नामक स्थान एक मात्र भोग पद है तथापि एक प्रमाता के दो भेद हैं। एक अभेद-अनुसंधाता दूसरा भेद-अनुसंधाता जिस में भेदानुसंधाता प्रमाता म-कार द्वारा अवबोधित पुरुष है। अतः मुख्य बिन्दु रूप प्रमाता का सन्निवेश प्रमातृपुर अष्टार में किया जाना उचित है, न कि प्रमाण-चक्र में। अतएव म-कार का रूपान्तर मनो-बुद्धि का सन्निवेश ही प्रमाण-चक्र में किया है। मकारात्मक पुरुष का प्रमाण-चक्र से केवल यही सम्बन्ध है।

# अष्टादशं सूत्रम्

स्वप्नेस्मृतं तदनुजाग्रति सत्यकल्पं
बन्धं प्रपद्यवपुषा स्वविमर्शशक्त्या।
क्षित्या च तत्परवशोहृतमातृभावो
मध्यन्दिनद्युमणिरेष मकार बिन्दुः।।१८।।

## व्याख्या

**विसर्ग व्याप्तिप्रकरणमुपसंहरन् आदितश्चिन्निगरणरूपं प्रकरणमेयं क्रोडीकृत्य दर्शयति। स्वप्न इत्यादि। स्वप्ने स्मृतं मनसा संकल्पितं तदनु जाग्रति सत्यकल्पं दृढानुभवारूढतया परमार्थवदेव भासनं न तु परमार्थता अन्तःकक्ष्या परामर्श निर्विकल्प चिदात्मनः शिवस्य नित्य निरावरणत्वेन भासमानत्वात् वहिरवभासमानस्य प्रवृत्तिरूप विमर्श स्पन्द विप्लवस्य चमत्कार प्रमातृत्वात्। अन्तः स्वविमर्श शक्त्यादि विमर्श शक्तेरेव स्वरूपेण वपुषः प्रकृति पर्यायेण बहिस्तु क्षित्या च एवं कक्ष्याद्वयेऽपि बन्धं प्रपद्य तत्परवशः तयोर्देहमहापृथिव्योः परवशः परतन्त्रः। हृत्मातृभावः ताभ्यामेवापहृत् मातृभावः प्रमेयतां प्रापित इति भावः। म-कार बिन्दुः मकार प्रतिपाद्योबिन्दुः चित्तत्वं पुरुष इत्यर्थः। मध्यन्दिनद्युमणिःमध्याह्नकाल सूर्यो जात इति शेषः यथा मध्यन्दिन सूर्य स्वरश्मिपटलेनस्थगितो नावभासते तथायमपि चिदात्मा स्वस्या एव विमर्श शक्तेर्विजृम्भण रूपेण अन्तर्वहिः प्रपञ्चेन च भार्या (आवृत) मूलस्वरूपो जात इत्यर्थः।।१८।।**

## भाषा टीका

### सूत्रसार -

विसर्ग व्याप्ति के प्रकरण का उपसंहार करते हुए इस सूत्र में स्पष्ट किया है कि आदितः विसर्ग बिन्दु को अपने अन्तर्गत लीन कर लेता है तथा विन्दु प्रमातृ-पद से वञ्चित होकर प्रमेय रूप में परिवर्तित हो जाता है।

## व्याख्या

स्वप्नावस्था में संकल्प मानसिक होता है, इसके पश्चात् जाग्रत् में अनुभव की दृढ़ता के कारण परमार्थ सत्य के समान विश्व का आभास होता है, वस्तुतः

पारमार्थिक रूप नहीं है। अन्तः में नित्य निरावरण रूप में भासित निर्विकल्प चिदात्मक शिव के, प्रमातृ-भाव ग्रहण करने के कारण, प्रवृत्ति रूप विमर्शात्मक स्पन्द का बाह्य चमत्कार होता है।

स्वयं शिव ही विमर्श-शक्ति के रूप में आभासित प्रकृति के पर्याय भूत शरीरात्मक बन्धन से अन्तः में, तथा पृथ्वीमय देहात्मक बन्धन से बाह्य में अर्थात् दोनों कक्षाओं में स्वयं को बद्ध कर लेते हैं तथा प्रकृति एवं पृथ्वीमय देह में परतन्त्र हो जाते है तथा प्रमातृभाव से वञ्चित होकर प्रमेय-भाव में आभासित होते हैं। इस प्रकार म-कार द्वारा अवबोधित बिन्दु मध्यन्दिनीय आकाश-मणि अर्थात् सूर्य के समान हो जाता है।

तात्पर्य यह कि जिस प्रकार मध्य-दिवसीय सूर्य का बिम्ब अपनी ही रश्मियों के पटल के प्रभाव से आच्छादित होकर दृष्टिगत नहीं होता है, उसी प्रकार अपनी ही विमर्श-शक्ति के विजृम्भित स्वरूप से अर्थात् अन्तः वहिः प्रपञ्च से आवृत होकर शिव-तत्त्व प्रकट नहीं होता है।

## ऊनविंशति सूत्रम्

यत्पादिवर्गवमुखार्णचतुष्टयस्य
सङ्कोचवर्जनमिदं खलुतन्त्रनीत्या।
तुर्यस्थितं हमुखशान्तचतुष्टयात्म
योज्यंक्रमेणबहिरन्तरभेद सृष्ट्योः।।१९।।

### व्याख्या

**इदानीं प्रकरणान्ते चिद्व्याप्तिरूपमुत्तरप्रकरणप्रमेयमवतारयन् जाग्रच्चक्रे वक्ष्यमाणेस्वप्नचक्रे च विसर्ग प्रमातुः प्रतिसिंहासवंतुर्यजाग्रत् स्वप्नरूपं पदद्वयं तत्र न्यायेन एकैकमातृकया समुन्मीलितं व्युत्पादयति। यत्पादि इत्यादि। पादिवर्गवमुखार्णचतुष्टयस्य विलोमेन पवर्गादिवर्गचतुष्टय पवर्गतवर्गं टवर्ग चवर्गरूपं वर्गचतुष्ट्य वकार लकाररेफयकाररूपं वर्णचतुष्टयं तस्योभयस्य। तन्त्ररीत्या एकयाक्रियया प्रयोजन द्वयसिद्धिरूपया तन्त्रनीत्यातन्त्रन्यायेन इदं। सङ्कोचवर्जनं खलु स्पृष्टेषत्स्पृष्टताप्रयत्नकृतसङ्कोचत्यागः खलु। यत्तुर्यस्थितं हमुखशान्तचतुष्ट्यात्मवर्णकदम्बकं, पवर्गस्य वकारस्य च सङ्कोचत्याग-रूपोहकारः। तवर्गस्य लकारस्यच सङ्कोचत्याग रूपः सकारः। टवर्गस्य च**

**रेफस्य च सङ्कोच त्यागरूपःषकारः। चवर्गस्ययकारस्य संङ्कोचत्यागरूपः शकार कवर्गस्य देह प्रतिपादकलकारस्य च विसर्गप्रमातृरूपत्वात् तस्य च चिद्व्याप्तिपदे चित्स्वरूपएवान्तरधानात् पदद्वयेऽपि हकार एव विलयनं अतो न तत्संकोचत्याग रूपो वर्णोऽन्वे षणीयः। एवम् स्पर्शसंकोचत्याग रूपमत तत्सङ्कोचत्यागरूपं हकारादिशकारान्तवर्णचतुष्ट्यं पदद्वय रूपं सत् क्रमेण। बहिरन्तरभेदसृष्ट्योः वहिरनेदसृष्ट्यां अन्तरभेदसृष्ट्यां च भेद जाग्रत् प्रतियोगिन्यभेद जाग्रत्पदे भेद स्वप्न प्रतियोगिन्यभेद स्वप्नपदेचेत्यर्थः। दशारयुग्मार्धपदे अष्टारार्धपदे चेति वेदितव्यम्योज्यंयोजनीयम्।।१९।।**

## भाषा टीका

### सूत्रसार -

आगामी प्रकरण का विषय चिद्व्याप्ति है। अतः भूमिका के रूप में इस सूत्र में जाग्रदात्मक एवम् स्वप्नात्मक चक्र में विसर्गप्रमाता का, तुर्य जाग्रत् एवम् स्वप्न की अवबोधक प्रत्येक मातृका के स्वरूप के उन्मीलन अर्थात् अभिव्यञ्जन की चर्चा करते हैं।

## व्याख्या

प-वर्ग, त-वर्ग, ट-वर्ग, च-वर्ग एवं क-वर्ग जाग्रत के द्योतक हैं तथा य, ल, र, व, अन्तःस्थ वर्णस्वप्न के अवबोधक हैं। जाग्रत् एव स्वप्न विसर्गात्मक अवस्थाऐं हैं। जाग्रत् का अवबोधक स्पर्श वर्ग स्पृष्ट-प्रयत्न है तथा स्वप्न का अवबोधक अन्तःस्थ वर्ण समूह ईषत्-स्पृष्ट प्रयत्न है। जब जाग्रत् एवं स्वप्न अवस्थाओं का सङ्कोच-त्याग होकर तुर्यात्मक चिद्व्याप्ति का संसरण होता है, तब इन दोनों अवस्थाओं के अवबोधक स्पृष्ट एवं ईषत्-स्पृष्ट वर्णों की श, ष, स, ह विवृतात्मक वर्णों के रूप में परिणति हो जाती है। यहाँ तन्त्र की नीति के अनुसार दो प्रयोजनों की सिद्धि एक ही क्रिया से की गई है। अर्थात् स्पृष्ट-वर्ग एवं अन्तःस्थ वर्गों की तुर्य के द्योतक ऊष्माण वर्णों में परिणति एक ही क्रिया से हो जाती है। इस प्रकार विलोम-क्रम से प-वर्ग तथा व-कार की ह-कार में, त-वर्ग एवं ल-कार की स-कार में ट-वर्ग एवं र-कार की षकार में तथा च-वर्ग एवं य-कार की श-कार में परिणति हो जाती है। क-वर्ग एवं देह-प्रतिपादक ल-कार को विसर्ग-प्रमाता के रूप में प्रतिपादन किया गया है; अतः चिदात्मक व्याप्ति में क-वर्ग एवं लकार का लय अर्थात् जाग्रत्

एवं स्वप्नात्मक प्रमाता का लय चित्स्वरूप ह-कार के अन्तर्गत हो जाता है। अतः क-वर्ग एवं लकार का लयस्थान ह-कार ही है, अतएव सङ्कोचत्याग रूप किसी अन्य वर्ण के अन्वेषण की आवश्यकता नहीं है।

तात्पर्य यह कि स्पर्श एवं अन्तःस्थ वर्णों के सङ्कोच-त्याग का स्वरूप विलोम क्रम में पठित ह, स, ष, श वर्ण चतुष्ट्य हैं। अर्थात् भेद-जाग्रतृ के प्रतियोगी अभेद-जाग्रत्, तथा भेद-स्वप्न के प्रतियोगी अभेद-स्वप्न का लय ह, स, ष, श द्वारा अभिव्यञ्जित तुर्य में होता है।



## विशेष

**सर्वो हि भेदपद एव भवः पुरस्त्**
**त्पश्चादभेदमवगच्छति जात बोधः।**
**शक्तिः शिवस्य महति प्रकृतिस्तदात्मा**
**भेदोग्रवन्दनमतोऽर्हति भेदतत्त्वम्।।१।।**

प्रथम समस्त भेदपद का आविर्भाव होता है, तत्पश्चात् बोध उत्पन्न हो जाने पर अभेदपद का ज्ञान होता है। शक्ति ही शिव की महती प्रकृति है एवं उसकी अभेद-रूप आत्मा है। अतः भेदतत्त्व ही प्रथम वन्दनीय है।

**संस्थापितां पुरत एव शिवेन मायां**
**पश्चात्करोति यजने द्वयतत्परो यः।**
**सिद्धं न याति शिवसामयि ? किं समूढ–**
**स्तस्माद्यजेत मुखतश्चतुरस्रबिम्बम्।।२।।**

द्वैतोपासना में तत्पर जो साधक शिव के द्वारा प्रथम संस्थापित माया का शिव के पूजन के पश्चात् यजन करता है, वह मूढ़ सिद्धि को प्राप्त नहीं करता है। अतः प्रकृति (माया) के प्रतीक चतुरस्र बिम्ब का प्रथम यजन आवश्यक है।

**ईकार योगज विसर्ग कलास्त बिन्दुः**
**प्रत्याहतं खलु विसर्गपदं कलाभ्याम्।**
**सद्यो जगत्सपदि संभृतभेदसिद्धिः**
**क्लींकार मूर्तिरनिशं मनुरभ्युदीर्यं।।३।।**

ईकार के योग से उद्भूत विसर्ग कला में बिन्दु अस्त (अन्तर्लीन) हो जाता है। अतः कल दो वर्णों के द्वारा विसर्ग पद का प्रत्याहार होता है। (अर्थात् पुनः संक्षेप में स्थापन होता है)। इस प्रकार शीघ्र एवं एक पद में ही जगत् की सिद्धि हो जाती है। अतएव क्लींकार मूर्ति रूप वर्णों का (क, ल) अहर्निंश उच्चारण करना चाहिये।

**येकारे कार गर्भ कलयुगलतमं मायया व्याप्तमौलिं**
**मन्त्रं मत्तोनुतिष्ठेदरुणमणिकृतामक्षमालां वहन्यः।**
**भुञ्जानोऽसौ भुजिष्याप्रकृतिकमणिमाद्याख्यया सप्रसिद्ध**
**सिद्धीनां सिद्धलभ्यं दशकमभवतां प्राप्य दिव्यैरिहैव।।४।।**

येकार एवं ईकार गर्भित माया का द्योतक वर्ण (इ) जिस के मौलि में विराजमान है ऐसे क-ल युगल से रचित माला से जप करै उस साधक को स्वाभाविक रूप से सिद्ध-लभ्य आणिमादि एवं जीवन-मुक्ति प्राप्त होती है।

**शिवानन्देन मुनिना देशिकादेशवर्तिना**
**चतुर्थं मातृकाचक्र-विवेके व्याकृतं पदम्।।५।।**

गुरु की कृपा से शिवानन्द मुनि ने श्रीमातृकाचक्र-विवेक के चतुर्थ खण्ड में इन पदों की रचना की है।

**इति श्री स्वतन्त्रानन्दनाथ विरचित श्रीमातृकाचक्र विवेक की शिवानन्द कृत संस्कृत व्याख्या एवं कृष्णानन्द कृत हिन्दी व्याख्या का चतुर्थः खण्डः।**

***चतुर्थ खण्डः***



# अथ पञ्चमः खण्डः

## प्रथमं सूत्रम्

अक्षेषु वेद्य विलयः खलु शुद्ध विद्या
देहे तदक्ष विलयो भवतीश्वरत्वम्।
ईशो हि विश्वमय देह कृताभिमानो
जाग्रच्छिवस्य पशु जागर चक्रलग्नम्।।१।।

### व्याख्या

अथ निवृत्तिरूपं तुर्यस्कन्धमारम्भमाणो निवृत्तिजाग्रदुपक्रमात्वान्निवृत्ति जाग्रदधिष्ठातारं शिवस्य सर्वकर्तृत्वभूमिकाभूतमीश्वराख्यं प्रमातारं तद्वाह्यदशा विशेषेण शुद्धविद्या प्रमात्रा सह लक्षयति। अक्षेषु इत्यादि। अक्षेष्विन्द्रियेषु श्री (पाण्यादिषु) वागादिषु घ्राणादिषु च। वेद्यविलयः वेद्यानां पृथिव्यादि भूतानाञ्च विलयस्तदेकीकरणं शुद्धविद्याखलु शुद्ध विद्याश्रयः प्रमाता शुद्ध विद्येत्युपचारः। पाशवे इन्द्रियप्रकाशाद्वहिस्तत्तत्सार्थक्येनावभासमानानां वेद्यानां इन्द्रियप्रकाशक-गर्भ एवावभासननैयत्यविमर्शनेन्द्रियप्रकाशविमर्शरूपताध्यवसायादिन्द्रियैकात्म्यानु भवरूपा शुद्धविद्या पाशव व्यामोहकर्तरि गुर्वनुग्रहमूलेन समुन्मिषतीति। सैषा शुद्धविद्या वेद्येषु पशुदशायामिदं प्रत्ययैक विषयेषु पाशव व्यावृत्तौ स्वात्मेन्द्रिय प्रकाशतादात्म्याध्यवसायादहंप्रत्ययविषयतामर्पयन्ति पाशनिवृत्तिप्रथमपदे मायो-त्तीर्ण मात्रे प्रमातरि द्योतमाना तदभिधानतामुपचारेण भजतीति तद्विवेक एव प्रमाणपदे प्रमेयनिमज्जन लक्षणं शुद्धविद्या प्रमातृपदं व्युत्पाद्य तदूर्ध्वतनीमीश्वरदशां व्युत्पादयति-देहेत्यादि। देहे प्रमातरि। तदक्षविलयः तेषां शुद्धविद्या दशाभ्यस्त-प्रमेय स्वात्मीकरणानामक्षाणां विलयो निमज्जनमेकरसीकरणमीश्वरत्वं भवति। शुद्ध विद्या दशायां प्रमाणपद निमज्जितानां प्रमेयानां प्रमाणपदेन सह देहात्मरूपे

**प्रभातृ पदे यद्देहांशे विनिमज्जनं तदीश्वरत्वमित्यर्थः। अत्र प्रथम प्रमेयात्मनो विश्वस्य किञ्चिदिदं प्रत्ययाधिवासिताहन्ताप्रत्ययविषयविषयत्वम्। देह पदे निमज्जितस्य विश्वस्य देहस्येव द्रढाहंप्रत्ययविषयत्वादीश्वरस्य देहाद्विश्वस्मिन्नपि चेष्टकत्वम्। अतेवसर्वकर्तृत्वमीश्वरस्येत्यवगन्तव्यम्। शुद्धविद्यापदेत्विदंप्रत्ययाहं-प्रत्यययोरिदं प्रत्ययस्यैवौल्बण्वात्विश्वचेष्टकत्वानुदयः। ईश्वरस्यानयादिशा (काम) विश्वशरीरस्य शिवजाग्रत्पपदत्वात्पशु जाग्रत्पदे संश्लेष इति प्रतिपादयति ईशोहीति। ईशो हि विश्वमये देहे कृताभिमानः शिवस्य जाग्रत परिच्छिन्न देहे कृताभिमानस्य-पशोर्जागरचक्रे दशारद्वयात्मके लग्नंश्लिष्टं पशुजाग्रत्पदे शिव जाग्रतः श्लेषौचित्यादितिभावः जडाजड पदयोः सुप्त्यादिदशात्रयेऽप्यन्योन्यश्लेष स्वभावता प्राक्प्रतिपादिता।।१।।**

## भाषा टीका

### सूत्रसार -

चतुर्थ-खण्ड में जाग्रद् अवस्था का निरूपण किया गया है। जाग्रत् में विमर्श का पूर्ण विकास तथा शिवत्व का पूर्ण सङ्कोच हो जाता है। यह अवस्था प्रवृत्यात्मक संसरण की चरम सीमा है। जाग्रद् अवस्था में जीव स्वयं को शिव से पृथक्, सीमित तथा बद्ध मानने लगता है। पञ्चम-खण्ड में निवृत्ति-रूप तुर्य दशा का विवरण प्रस्तुत किया गया है।

## व्याख्या

तुर्यात्मक अनुभूति जाग्रत् दशा में होती है अतः तुर्य को निवृत्ति-जाग्रत् अवस्था के नाम से सम्बोधित किया जाता है। निवृत्ति-जाग्रत् पद के अधिष्ठाता शिव हैं। शिव के सर्व-कर्तृत्व शक्ति की भूमिका का रूप ईश्वर-प्रमाता है; एवं ईश्वर-तत्त्व की बाह्य दशा-विशेष शुद्ध-विद्या है; अतः प्रथम इस सूत्र में ईश्वर प्रमाता तथा शुद्ध-विद्या प्रमाता का निरूपण किया जाता है।

सूत्रकार के अनुसार "इन्द्रियों में वेद्य का विलय" ही शुद्धविद्या की परिभाषा है। अर्थात् वागादि कर्मेन्द्रियों तथा घ्राण आदि ज्ञानेन्द्रियों में वेद्य अर्थात् पृथ्वी आदि पञ्च-महाभूतों के एकीकरण को शुद्ध-विद्या के नाम से संबोधित किया है। जीवावस्था में इन्द्रियों के प्रकाश से बाह्य विषयों के सहित अवभासित

वेद्य का, इन्द्रिय-प्रकाशक तत्त्व के अन्तर्गत प्रकाश-विमर्श रूप अध्यवसाय के कारण, इन्द्रियों के साथ एकीकरण हो जाता है। इस कारण वेद्य एवं इन्द्रियों के तादात्म्य की अनुभूति की स्वरूप-भूता शुद्ध-विद्या का समुन्मेष गुरु की कृपा से होता है। शुद्ध-विद्या तत्त्व की अनुभूति का उदय होने से जीव बन्धन से मुक्त हो जाता है। निवृत्यात्मक प्रवाह में इन्द्रियों के प्रकाश से आत्मा के तादात्म्य-रूप अध्यवसाय के द्वारा शुद्ध-विद्या, इदता नाम से सम्बोधित वेद्य विषयों में, अहंता प्रत्यय का समारोप करती है। अर्थात् शुद्ध-विद्या के उदय से इदंता का अहंता में विलय हो जाता है।

वस्तुतः वेद्य एवं इन्द्रियों के तादात्म्य की अनुभूति शुद्ध-विद्याश्रित मायोत्तीर्ण प्रमाता में होती है, न कि शुद्ध-विद्या में; किन्तु उपचार से यहाँ शुद्ध-विद्या-प्रमाता को शुद्ध-विद्या के नाम से सम्बोधित किया गया है। इन्द्रियाँ प्रमाण-पद हैं, वेद्य-विश्व प्रमेय-पद है, अतः अन्ततोगत्त्वा प्रमाण में प्रमेय का निमज्जन ही शुद्ध-विद्या की परिभाषा है।

सूत्र की द्वितीय पंक्ति में ईश्वर-तत्त्व की परिभाषा की गई है। देह रूप प्रमाता में इन्द्रियों का विलय ईश्वर-तत्त्व है। शुद्धविद्या में अभ्यस्त इन्द्रियों का देहात्मक-प्रमाता में लय हो जाता है, यह एकीकरण ईश्वर-तत्त्व है।

प्रमेयात्मक विश्व का विषय अहंता से मिश्रित इदंता है। देह पद में निमज्जित विश्व का विषय दृढ़ अहंता है। अतः विश्वात्मक देह के अन्तर्गत ईश्वर का चेष्टकत्व अर्थात् कर्तृत्व सिद्ध है। अतएव सर्वकर्तृत्व ईश्वर की ही शक्ति है। शुद्ध-विद्या तत्त्व में इदंता की प्रधानता के कारण विश्व-कर्तृत्व का उदय नहीं होता है।

इस प्रकार विश्वात्मक ईश्वर-तत्त्व शिव की जाग्रत् अवस्था है, इस कारण इसका पशु-जाग्रत् पद से संश्लेष है। विश्वात्मक देह में ईश्वर अभिमानवान देवता है, अतः शिव-जाग्रत् अवस्था में कृताभिमान शिव का दशारद्वयात्मक पशु-जाग्रत् अवस्था में अभिमानवान जीव से श्रीचक्र में संश्लेष दर्शाया गया है जो युक्ति युक्त है।

सुप्ति आदि तीनों दशाओं में जडाजड पद के अन्योन्य संश्लेशात्मक स्वभाव का प्रतिपादन पूर्व में ही किया जा चुका है।

# द्वितीयं सूत्रम्

यद्बाह्यबाह्यपद मज्जनमन्तरन्त-
स्तच्चित्पदे जडपदे विपरीतमेतत्।
अक्षात्म वेद्यमिह शः स हि शुद्धविद्या
देहाविभिन्नकरणेन्द्रियमीश्वरः षः।।२।।

## व्याख्या

अथ निवृत्तिरूपस्य शुद्ध विद्या प्रमातुः प्रमेयेषु अभ्यस्यमानाहंभावस्य भेदो न प्रशान्तइत्यभेदजाग्रत्पदाधिष्ठातृत्वं नाभ्युपगतम्। चिद्व्याप्तिपदस्य-बहिर्वहिरर्थाना-मन्तरन्तर्येषु निमज्जन रूपं स्वभावं व्युत्पादयन् शवर्गे शुद्ध-विद्याद्यभेदप्रमातृणां विषयविभागंदर्शयति। यद्बाह्येत्यादि। अन्तरन्तः पदे बाह्यबाह्यपदमज्जनं यद्बाह्यबाह्य पदस्ययन्मज्जनं प्रमेयाणांप्रमाणपदे मज्जनं प्रमाणानां प्रमातृपदेमज्जनमित्यर्थ। तच्चित्पदे चिद्व्याप्तिपदे भवतीति शेषः। जडपदे। चैत्यव्याप्तिपदे। एतद्विपरीतम्। अन्तरन्तःपदस्य बहिर्बहिःपदे मज्जनं विपरीतम्। प्रमातृपदस्य प्रमाणपदे मज्जनं प्रमाणपदस्यप्रमेयपदेमज्जन मित्यर्थः। इह शुद्धविद्येश्वरसदाशिवशक्त्याह्वयस्य प्रमातृचतुष्टयस्य। साधारणपदे शवर्गे। अक्षात्म इन्द्रियप्रकाशैकात्म। इन्द्रियप्रकाशे लब्धैकात्म्यमित्यर्थः। वेद्यंप्रमेयजातम्। शवर्णइतिवेदितव्यम्। प्रमाण लब्धैकात्मप्रमेय-स्थानीयः शवर्ण इत्यर्थः यद्यपि चवर्गयकारसङ्कोचत्यागात्मनः शकारस्य शब्दादि मात्र वेद्यस्थानीयत्वमुक्तम्। तथापि सर्वप्रमेयोप लक्षणत्वेनचित्पदेऽहंकारे कवर्ग लकारयोर्मज्जनाद्बहिरवभासमानश्चवर्ग यकारयोः रूपभेदशकारोऽपिसर्वप्रमेयोप-लक्षणइति वेदितव्यम्। सहि शकारः शुद्धविद्याप्रमाता प्रमातृ प्रमाण प्रमेय रूपेण पदत्रयेण निष्पाद्यस्वरूपस्य प्रमातुः कथं प्रमेयमात्र प्रतिपादके शकारे स्वरूपोपपत्तिरित्यत्रोच्यते। वर्ण चतुष्टयात्मकः सर्वोऽपिशवर्गः शुद्ध विद्यादि प्रमातृ चतुष्टयस्य साधारणपदे प्रत्येकं स्वरूपं भवति। तथापि शुद्ध विद्यादीनां चतुर्णां प्रमातृणां शकारादयश्चत्वारोवर्णाः एकैकस्यैकैक एव स्वरूपसिद्धिहेतु भूतस्य विशेषस्य प्रतिपादक। इत्युपचारात् तत्तदेकैकवर्णरूपतातेषाम् तथाहि शुद्ध विद्याप्रमातुरिन्द्रियैकात्म्य वेद्यत्वं स्वरूपसिद्धिहेतु विशेषः। अतस्तस्येन्द्रियैकात्म्य वेद्यप्रतिपादकशकार रूपत्वम्। ईश्वरस्य प्रमातुर्देहविभिन्न कार्य वेद्यैकात्म्य-कर्मेन्द्रियत्वम्। स्वरूपसिद्धि हेतुर्विशेषः। अतस्तस्य तादृक् कर्मेन्द्रियप्रतिपादक षकार रूपत्वम्। एतदेव आह देहाविभिन्न करणेन्द्रियमीश्वरः स इति।।२।।

# भाषा टीका

## सूत्रसार -

प्रमेय में अनुभूत अहंभाव के कारण निवृत्ति रूप शुद्ध-विद्यात्मक प्रमाता में भेद-ज्ञान का शमन नहीं होता है; अतएव शुद्ध-विद्या अवस्था में प्रमाता को अभेद-जाग्रत पद का अधिष्ठातृत्व प्राप्त नहीं होता है। अतः इस सूत्र के अन्तर्गत चित् की ओर प्रवाहित पद में बाह्य अर्थों का अन्तः अर्थों (तत्त्वों) में निमज्जन रूप स्वभाव को दर्शाते हुए श-वर्ग में शुद्ध-विद्या आदि अभेद प्रमाताओं के विषय का विभाजन किया जाता है।

## व्याख्या

चिद्-व्यप्ति में वाह्य अर्थों का अन्तः अर्थों में लय हो जाता है। अर्थात् प्रमेय का प्रमाण-पद में तथा प्रमाण-पद का प्रमातृ-पद में लय होता है। अचित् व्याप्ति में यह क्रम विपरीत हो जाता है। अर्थात् प्रमाता का प्रमाण में तथा प्रमाण का प्रमेय में निमज्जन होता है।

शुद्ध-विद्या, ईश्वर, सदाशिव तथा शक्ति नामक प्रमाता-चतुष्ट्य का साधारण-पद श-वर्ग है। इनके अन्तर्गत इन्द्रिय-प्रकाश में वेद्य के विलय का द्योतक श-कार है। अतः प्रमेय श-कार है।

च-वर्ग तथा य-कार के सङ्कोच-त्याग के परिणाम का स्वरूप श-कार है, च-वर्ग एवं य-कार शब्दादि तन्मात्राओं के द्योतक हैं; अतः श-कार को भी तन्मात्रा आदि वेद्य-स्थानीय स्वीकार करना युक्ति युक्त है। श-कार को समस्त प्रमेय का द्योतक दुहराना युक्ति युक्त नहीं है। इस आपत्ति के उत्तर में टीकाकार लिखते हैं कि क-वर्ग तथा ल-कार समस्त प्रमेय का उपलक्षण है। जब क-वर्ग तथा ल-कार का चित्पद-गत अहङ्कार में लय हो जाता है तब बाह्य भासित च-वर्ग एवं यकार का रूपान्तर श-कार भी सर्व प्रमेय का उपलक्षण हो जाता है। अतः श-कार को समस्त-प्रमेय रूप स्वीकार करने में कोई आपत्ति नहीं है।

श-कार को प्रमेय रूप स्वीकार कर लेने पर दूसरी आपत्ति यह होती है कि श-कार शुद्ध-विद्या प्रमाता है, प्रमाता के स्वरूप का निष्पादन प्रमेय, प्रमाण तथा प्रमाता तीनों पदों से होता है अतः केवल प्रमेय के प्रतिपादक श-कार से प्रमाता के स्वरूप के अभिव्यञ्जन में औचित्य नहीं है। इस पर टीकाकार

की युक्ति है कि सम्पूर्ण श-वर्ग साधारण रूप से शुद्ध-विद्या आदि चारों प्रमाताओं का द्योतक है; तथापि शुद्ध-विद्या, ईश्वर, सदाशिव, शक्ति-चारों प्रमाताओं में से प्रत्येक के पृथक्-पृथक् श, ष, स, ह वर्ण द्योतक हैं अतः उपचार से एक-एक वर्ण एक-एक प्रमाता का स्वरूप है। वेद्य की इन्द्रियों में एकाकारता शुद्ध-विद्या के स्वरूप की सिद्धि में हेतु विशेष है; अतः इन्द्रियों के साथ वेद्य के एकात्म्य का प्रतिपादक श-कार शुद्ध-विद्या प्रमाता का स्वरूप है।

ईश्वर-प्रमाता के स्वरूप की सिद्धि का हेतु विशेष देह से अभिन्न कार्य-वेद्य का ऐक्य है अर्थात् कर्मेन्द्रियत्व है; अतः कर्मेन्द्रियों का प्रतिपादक ष-कार ईश्वर-तत्त्व का स्वरूप है।

## तृतीयं सूत्रम्

**ज्ञानेन्द्रियं स हि सदाशिव आत्मनैक्ये**
**स्वात्मा स्वविश्रममयो ह इतीह शक्तिः।**
**एतत्तुरीयपदमङ्गचतुष्टयाढ्यम्**
**बाह्यान्तराल पदयोः श्रितरूपसाम्यम्।।३।।**

### व्याख्या

**अथ सदाशिवशक्ति प्रमातृस्वरूप वर्णद्वयमाह। ज्ञानेन्द्रियमित्यादि। सदाशिवस्य प्रमातुरात्माविभिन्नसात्मीकृत ज्ञेयवेद्यज्ञानेन्द्रियत्वं स्वरूपसिद्धिहेतुर्विशेषः। अतस्तस्य तादृग् ज्ञानेन्द्रिय प्रतिपादक सकाररूपम्। एतदाह। आत्मनैक्ये आत्मना तादाम्ये सति तादृशं ज्ञानेन्द्रियं स हि सकारो तादृग् ज्ञानेन्द्रिय प्रतिपादकः सकारो हि सदाशिव इत्यर्थः। खविश्रममयः अपरिच्छिन्न चिदचित्सामरस्य-रूपाकाशविश्रान्तिमयः। स्वात्मा देहात्मनोभय लक्षणं स्वरूपम्। ह इति हकार इति वर्ण। इह शवर्गे शक्तिः शक्तिनाम प्रमाता अपरिच्छिन्नविश्रान्तिमयदेहात्म-सामरस्य लक्षण स्वरूपत्वं शक्तेः स्वरूपसिद्धि हेतुर्विशेषः। अतस्तस्यास्तादृक् स्वरूप प्रतिपादक हकार रूपत्वम्। एवं शुद्ध विद्यादीनां साधारणप्रदे शवर्गं तत्स्वरूपसिद्धि हेतुर्विशेषप्रतिपादक वर्णाश्रयणेन विषय विभागव्युत्पाद्यास्य शवर्ग रूपस्य पदस्य वाह्ये स्पर्श सङ्कोच त्यागरूपस्यान्तरन्तःस्थ सङ्कोचत्यागरूपस्यो-भयत्र रूप साम्यम् प्रागुपदिष्टमेव स्फुटप्रत्यायोद्घाटयति एतदित्यादि।**

**अङ्गचतुष्टयाढ्यं महाभूत चतुष्ट्य गर्भिण्याः महापृथिव्याः प्रकृत्याश्च चित्पदे हकारे निमज्जनादुभयत्राङ्ग चतुष्टयाढ्यम्। एतत्तुरीयपदं अभेद जाग्रत् स्वप्नरूपं तुर्यपदम्। बाह्यान्तरालपदयोः स्पर्शान्तः स्थप्रतिपाद्य जाग्रत्स्वप्नपदयोः। श्रितरूपसाम्यम्। च वर्गस्य यकारस्यापि सङ्कोचत्यागे शकार एव ट-वर्गस्य रेफस्य सङ्कोच त्यागे षकार एव। एवमवशिष्टमुन्नेयम्।।**

# भाषा टीका

## सूत्रसार -

सदाशिव तथा शक्ति-प्रमाता का स्वरूप क्रमशः सकार तथा हकार है जिसका कथन इस सूत्र में करते हैं।

## व्याख्या

सदाशिव-प्रमाता के स्वरूप की सिद्धि का हेतु-विशेष आत्मा से अभिन्न (अर्थात् एकीकृत) ज्ञानेन्द्रियाँ हैं; ज्ञानेन्द्रियों का प्रतिपादक सकार है; अतः सकार ही सदाशिव है।

अपरिछिन्न चित् तथा अचित् के सामरस्य का रूप, देह तथा आत्मा उभय के लक्षण से लक्षित, विश्रान्तिमय आकाश का स्वरूप हकार है। सूत्रकार ने हकार का शक्ति-प्रमाता के नाम से उल्लेख किया है। अतः अपरिछिन्न, विश्रान्तिमय, देहात्म का सामरस्य स्वरूप आकाश-तत्त्व शक्ति-प्रमाता के स्वरूप की सिद्धि का हेतु-विशेष है। अतः शक्ति के इस स्वरूप का प्रतिपादक हकार है।

इस प्रकार शुद्ध-विद्या आदि के साधारण पद श-वर्ग में प्रत्येक के स्वरूप-सिद्धि के हेतु-विशेष का वर्णों के आश्रय से प्रतिपादन किया गया है एवं विषयों के विभाग को दर्शाया है। अब श वर्ग पद के बाह्य कक्षा में पूर्व प्रतिपादित स्पर्श के सङ्कोच-त्याग एवम् अन्तःस्थ के संकोच-त्याग-रूप के साम्य का स्पष्ट प्रतिपादन करते हैं।

यह तुरीय-पद चार अङ्गों से युक्त है। पृथ्वी, जल, अग्नि तथा वायु तत्त्वों से युक्त महापृथ्वी एव प्रकृति का चित् पद के द्योतक हकार में लय हो जाते हैं इस कारण सिद्ध है कि बाह्य एवं अन्तः उभय पद अङ्ग-चतुष्ट्य से युक्त है। यही तुरीय पद है।

अर्थात् तुर्य-पद जाग्रत् तथा स्वप्न का अभेद रूप है। स्पर्श-वर्ण तथा अन्तस्थ-वर्ण जाग्रत् तथा स्वप्न के प्रतिपादक हैं। इस प्रकार बाह्य तथा अन्तराल अर्थात् स्पर्श एवं अन्तःस्थ वर्णों द्वारा अवबोधित जाग्रत् एवं स्वप्न पदों का सङ्कोच-त्याग स्वरूप शवर्ग है अत एव उभय पदों में श्रित-रूप साम्य है।

च-वर्ग एव य-कार का संकोच-त्याग रूप श-वर्ण, ट-वर्ग तथा रेफ का संकोच-त्याग रूप षकार है तथा अन्य भी इसी प्रकार जानना चाहिये। अर्थात् त-वर्ग तथा ल का संकोच-त्याग-रूप सकार प-वर्ग एवं वकार का संकोच-त्याग-रूप हकार है।

# चतुर्थं सूत्रम्

एतत्पदंपदमखण्डितमेवशुद्ध-
विद्यादिकस्यखलु तत्त्वचतुष्टयस्य।
वेद्याद्यु दञ्चितचितिस्फुरणक्रमेण
तत्तद्दशावतरणं विबुधैर्विभाव्यम्।।४।।

## व्याख्या

**शवर्ण शुद्धविद्यादीनां प्रत्येक स्वर एव साधारणं पदमित्युक्तम्। तदेवाह एतदित्यादि। एतछवर्गरूपं पदं अखण्डितमेव अविभक्तमेव। शुद्धविद्यादिकस्य तत्वचतुष्टयस्यपदम्। प्रमाण प्रमेयाङ्गस्य प्रमातुरेकवर्णमात्रेण दुष्प्रतिपादत्वात्। एवमपि शुद्धविद्यादीनामेकैकवर्णोपचारे प्राक्प्रतिपादितोपपत्तिमासूत्रयति वेद्यादिति। वेद्याद्युदञ्चितचितिस्फुरण चैत्यव्याप्त्यवसाने यदा तदुन्मेषप्रारम्भः तदायं प्रारम्भो वेद्यादिक एव भवतीत्यनुभवः प्रमाणम्। तथाहि पाशवावसाने साधको गुर्वनुग्रहसमुन्मिषितविवेकदृष्टिर्वेद्यमे वस्वात्मेन्द्रियप्रकाशे निमज्जयति। प्रमेयस्वैवं-प्रमाण निमज्जनाभ्यासादारूढ़शुद्धविद्यास्वभावस्तदनन्तरं स्वात्मीकृत प्रमेयंप्रमाण-प्रमातृपदे निमज्जयितुमुद्युञ्जानः शरीररूपे तावत्प्रमातृ-भागे स्वात्मीकृतकार्यप्रमेयं कर्मेन्द्रिय वर्गरूपं प्रमाणंनिमज्जयति। अतोविश्वशरीरः सन् विश्वचेष्टकतयाविर्भूत सर्वकर्तृत्वशक्तिरारूढ़ेश्वरता कक्ष्यस्ततः परं स्वात्मीकृतज्ञेयप्रमेयं ज्ञानेन्द्रिय प्रमाणमात्मरूपे प्रमातरिनिमज्जयति अतोविश्वात्मकः सन्नाविर्भूतसर्वज्ञत्व शक्तिरारूढ़सदाशिवकक्ष्यो ज्ञानस्य प्राग्भावे न कियां क्रियाप्राग्भावे न ज्ञान**

**चानुसन्दधानस्ततः परं ज्ञानक्रिया सामरस्यभूमिमपरिच्छिन्नविश्रान्तिमयीमिच्छात्मिकां शक्तिक्रियामारोहतीति प्रक्रियया वेद्याद्युद्रञ्चितचितिस्फुरणक्रमेणतत्तदंशवर्णउक्त मर्यादया। शुद्धविद्यादि तत्तदशावतरणम् बिबुधैर्विद्वद्भिर्विभाव्यम्। उक्त मर्यादया वेद्यादिकं चित्प्रवहणे यं यं भागमधिकृत शुद्धविद्यादीनां स्वरूपलाभः तत्तद्भावरूपतत्तदावरणस्य तत्तत्प्रमातृपदत्वमौपचारिकमितिभावः।।४।।**

## भाषा टीका

### सूत्रसार -

तृतीय सूत्र में शुद्ध-विद्या, ईश्वर, सदाशिव एवं शक्ति तत्त्वों के द्योतक क्रमशः श, ष, स, ह वर्ण दर्शाए गये हैं तथापि सिद्धांततः चारों तत्त्वों का एक, अखंड, अविभक्त स्वरूप है किंतु प्रमातृ-पद का, जिसके प्रमाण तथा प्रमेय अङ्ग हैं, केवल एक वर्ण के द्वारा प्रतिपादन दुष्कर है। अतः शुद्ध-विद्या आदि चार तत्त्वों में से प्रत्येक को पृथक्-पृथक् वर्णों के द्वारा अभिव्यञ्जन करने के कारण का यहाँ विवेचन करते हैं।

## व्याख्या

चैत्य के अवसान के समय अर्थात् जब चैत्य का चित् की ओर प्रवाह होता है तब शुद्ध-विद्या आदि तत्त्वों के उदय के प्रारम्भ में प्रमेय का ही अनुभव होता है। पाशव-दशा अर्थात् चैत्य अवसान होने पर गुरु की कृपा से साधक की विवेक-दृष्टि का जब पूर्ण रूप से उन्मेष होता है तब निम्न उल्लिखित क्रम से प्रमेय का निमज्जन होता है।

१) सर्वप्रथम स्वात्मेंन्द्रिय प्रकाश में वेद्य अर्थात् प्रमेय का निमज्जन होता है। जिसके अभ्यास से शुद्ध शुद्ध-विद्या की अनुभूति में स्वभावतः दृढ़ता उत्पन्न होती है।

२) तदनन्तर अर्थात् शुद्ध-विद्या प्रमाता में प्रमाण तथा प्रमेय दोनों के दृढ़ रूप से लय हो जाने पर, देह-प्रमाता में प्रमाण रूप कर्मेन्द्रियों का निमज्जन होता है जो ईश्वर-तत्त्व है। इस प्रकार निमज्जन के परिणाम स्वरूप विश्वाकार में परिणत चित् में विश्वकर्तृत्व के आविर्भाव के कारण ईश्वर-कक्षा सर्वकर्तृत्व शक्ति से सम्पन्न हो जाती है।

३) कर्मेन्द्रियों के निमज्जन के पश्चात् ज्ञानेन्द्रिय रूप प्रमाण का आत्म-तत्त्व में निमज्जन होता है; जिसके कारण विश्वात्मक, चित् ईश्वर-तत्त्व में सर्वज्ञत्व-शक्ति का उदय होता है जो सदाशिव कक्षा के नाम से प्रसिद्ध है।

४) क्रिया के बिना ज्ञान का तथा ज्ञान के बिना क्रिया का अनुसन्धान नहीं होता है। ज्ञान एवं क्रिया के अनुसन्धान के पश्चात् दोनों के सामरस्य-रूप इच्छा का अनुसंधान होता है। अर्थात् ज्ञान क्रिया की सामरस्य-भूमि अपरिच्छिन्न विश्रान्तिमयी इच्छा-शक्ति में साधक का आरोहण होता है।

वेद्य-प्रमेय के अवसान होने पर चिति के चित्-स्वरूप में स्फुरित होने की प्रक्रिया का उपर्युक्त क्रम है। इसी क्रम से शुद्ध-विद्या, ईश्वर, सदाशिव, तथा शक्ति का अपने-अपने अंश के द्योतक वर्णों की मर्यादा के अन्तर्गत अवतरण होता है।

सूत्रकार ने शुद्धविद्या आदि तत्त्वों में प्रमेय आदि के निमज्जन का उल्लेख किया है। किन्तु वास्तव में यह लय शुद्ध-विद्या आदि प्रमाताओं में होता है अतः यहाँ लय क्रम में शुद्ध-विद्या आदि का तात्पर्य उपचार से शुद्ध-विद्या-प्रमाता, ईश्वर-प्रमाता, सदाशिव-प्रमाता तथा शक्ति-प्रमाता से है।

## पञ्चमं सूत्रम्

**सा (स) दा शिवः सखलुबिन्दुमयस्तवर्ग-**
**तत्रेश्वराङ्गमयमान्तरधामयोग्यः।**
**ज्ञानक्रिये ननु शिवस्य सदाशिवेशा-**
**वन्तर्वहिश्च नियताङ्गिपदौ क्रमेण।।५।।**

### व्याख्या

**इदानीं बाह्ये ज्ञानेन्द्रिय प्रतिपादक त वर्ग सङ्कोच त्याग रूपस्य सकारस्य सदाशिवकलायाः सतोऽपि बहिस्तस्य प्राधान्यानौचित्यादीश्वराङ्गत्वम्। अन्तः पदे रेफाक्षरत्यागरूपस्य षकास्येश्वरकलायाः सदाशिवाङ्गत्वमिति व्युत्पादयति। सदाशिवेत्यादि बिन्दुमयस्त्यक्त सङ्कोच इत्यर्थः। त वर्ग। स खलु सकारः खलु। असौ सकारः सदाशिवस्वभावः अन्तर्धामयोग्यः। स्वप्नलक्षण ज्ञान कक्ष्या समुचितोऽयं सकार रूपः सदाशिव स्वभावः तत्र बाह्यपदे क्रियाप्रधाने ईश्वराङ्गम्। ईश्वरस्याङ्गमेव। क्रियापदे ज्ञानांशस्य न्यग्भावः अत्रोपपत्तिमाह। सदाशिवेसौ शिवस्य ज्ञानक्रिये। ननु शिवस्य ज्ञानशक्ति विलासरूपसदाशिवः क्रियाशक्ति-विलासरूप ईश्वरः अस्तु प्रकृते का नामोपपत्तिरित्यत्राह। एतौ सदाशिवेसौ क्रमेणान्तर्वहिश्च नियताङ्गिपदौ सदाशिवस्यान्तः कक्ष्यानियतमङ्गि पदं तस्य ज्ञानस्वभावात्। ज्ञानस्य चान्तः पदे प्राधान्यात् बहिः कक्ष्या त्वङ्ग पदं, ईश्वरस्य**

बहिः कक्ष्याङ्गिपदं तस्य क्रिया स्वभावात्। क्रियायाश्च बाह्यपदे प्राधान्यात्। तस्यान्तः कक्ष्यात्वङ्ग पदम्। अतो रेफसङ्कोचत्यागरूपस्य षकारस्येश्वरकलायास्तत्राङ्गत्वमेवेति विवेकः।।५।।

## भाषा टीका

### सूत्रसार -

ज्ञानेन्द्रियों के प्रतिपादक त-वर्ग का सङ्कोच-त्याग-रूप सकार यद्यपि सदाशिव कला का द्योतक है तथापि बाह्य-कक्षा में सदाशिव के प्राधान्य का औचित्य नहीं है। बाह्य दशा में सदाशिव ईश्वर का अङ्ग है, अन्तः पद में रेफ के सङ्कोच-त्याग-रूप षकार के द्वारा अभिव्यञ्जित ईश्वर-तत्त्व सदाशिव का अङ्ग है। ईश्वर तथा सदाशिव का परस्पर अङ्ग-अङ्गी-भाव इस सूत्र का विषय है।

## व्याख्या

बिन्दुमय अर्थात् मुक्त-सङ्कोच त वर्ग सदाशिव स्वभावरूप सकार है। सदाशिव-तत्त्व स्वप्नात्मक ज्ञानावस्था है, अतः क्रिया प्रधान बाह्य-पद ईश्वर तत्त्व का सदाशिव अङ्ग है; क्योंकि क्रिया-पद में ज्ञान का हीन भाव हो जाता है। सदाशिव तथा ईश्वर-तत्त्व दोनों ही क्रमशः शिव के ज्ञान एव क्रिया का स्वरूप हैं। शिव की ज्ञान शक्ति की लीला का स्वरूप सदाशिव एवं क्रिया-शक्ति का विलास रूप ईश्वर-तत्त्व है। अतः अन्तः तथा बाह्य क्रम से दोनों तत्त्व अङ्गि हैं। ज्ञानस्वरूप होने के कारण सदाशिव अन्तः कक्षा में अङ्गी है क्योंकि अन्तःपद में ज्ञान का प्राधान्य होता है; अतएव बाह्य कक्षा में ज्ञान गौण होने से अङ्ग है; बाह्य कक्षा में क्रियात्मक स्वभाव की प्रधानता होने से ईश्वर तत्त्व अङ्गि हैं। तथा अन्तः कक्षा में वह अङ्ग है क्योंकि अन्तः कक्षा ज्ञान प्रधान हैं।

# षष्ठं सूत्रम्

इच्छा प पञ्चक ब बिन्दुमयी हशक्ति-<br>
र्ज्ञान क्रिया समपदं खलु सोभयात्मा।<br>
बिन्दौ समुन्मिषति सर्गपदे क्रमेण<br>
संसृष्टिरापरिसमाप्तितयोर्विभाव्या।।६।।

## व्याख्या

सदाशिव कलायाः अन्तः प्राधान्यामीश्वरकलायाः वहिः प्राधान्यमित्युक्तम्। इदानीं शक्तयाः कलायाः इच्छात्मिकायाः साम्येन तदुभय मूलतया वहिरन्तरपि प्राधान्यमिति व्युत्पादयति इच्छेत्यादि। प पञ्चक ब विन्दुमयी वर्ण पञ्चकात्मनः प वर्गस्य वकारस्य च योबिन्दुत्वं गुणप्रधानोऽयं निर्देशः। सङ्कोच त्याग इत्यर्थः। तन्मयी तत्स्वरूपा ह शक्तिः हकार प्रतिपाद्या शक्ति दशा। इच्छा स्वभावा। सा इच्छाशक्तिः ज्ञान क्रिया समपदंज्ञानक्रिययो साधारण्येन मूलपदम्। इच्छां (बिना) विज्ञानमपि न प्रवर्तते क्रियापि न प्रवर्तते इति ज्ञान क्रिययोः इच्छैवान्तरं कूटस्थं रूपम्। अतेव सा उभयात्मा उभयस्य ज्ञानस्य क्रियायाश्च आत्मा मूलस्वरूपम्। अतस्तस्या ज्ञान-पदेऽअन्तः क्रिया पदे बहिश्च प्राधान्यमेव नाङ्गत्वमिति भावः। इदानीं विसर्ग पदे विद्यादि क्रमेण बिन्दून्मेषे प्रवृत्ते सत्यसौ बिन्दून्मेषः क्रमप्रवृत्तिशाली यावत्सर्वमपि पदं व्याप्नोति तावद्विसर्ग गन्धस्यानुवृत्तत्वाद्बिन्दु विसर्गयोः संसृष्टिरेव न बिन्दोरेकाधिपत्यमिति व्युत्पादयति। बिन्दौइत्यादि। सर्ग पदे क्रमेण बिन्दौसमुन्मिषति सति। आपरिसमाप्ति सर्वत्र पदे बिन्दु व्याप्ति निष्पत्ति पर्यन्तं तयोर्बिन्दु विसर्गयोः संसृष्टि। त्रिपुटी रूपे पदे क्वचिद् बिन्दून्मेषः क्वचिद् विसर्ग स्फुरत्तेत्ति संसृष्टिः विभाव्या ऊहनीयः अयमर्थः। शुद्ध विद्या प्रमातरि वेद्यानामिन्द्रिय प्रकाश निमज्जनेन वेद्यांश एव चिदुन्मेषः। इन्द्रियाणां प्रमातृ पदे निमज्जनाभ्यास पाटवाभावादिन्द्रियादिकेषूत्तरोत्तरपदेषु भेदस्याप्रशमाद्विसर्गस्य स्फुरत्तेति। बिन्दु विसर्ग संसृष्टिः ईश्वरदशायां शुद्ध विद्योत्तर पदत्वात्प्रमेयेषु चिदुन्मेषः सिद्ध एव। विशेषस्तु स्वात्मीकृत स्वविषयाणां कर्मेन्द्रियाणां देहात्मक प्रमातृपदे निमज्जन्। स्वात्मीकृत स्व विषयाणां ज्ञानेन्द्रियाणामात्मरूपे-प्रमातृपदभागे निमज्जन तत्प्राधान्येन अपाटवमेवाप्रधानम्। अतस्तदाद्युत्तर पदे भेदस्फुरत्तेति विसर्ग संसृष्टिः। सदाशिव दशायामीश्वर दशा पर्यन्त चिदभेदोन्मेषः सिद्ध एव। विशेषस्तु स्वात्मीकृत ज्ञेयानां ज्ञान करणानां विश्वमयस्य च स्वात्म प्रमातृपदे निमज्जनम् तस्या अपि दशाया निराकुल चिद्विश्रमरूपेच्छा-शक्तितत्वैकात्म्यम् सावशेषमिति तदंशे भेदगन्धाद्विसर्गस्पर्शः। शक्ति दशायां तु विश्रमरूपत्वादपरिच्छिन्नायामेवाभेद साम्राज्यमिति तात्पर्यस्। तं बिन्दून्मेष पदे विसर्गांनुवृत्तितारतम्यविवेकशुद्धविद्यादि तत्वानां प्रस्फुट ज्ञान कारणमिति तस्य तत्कर्त्तव्यत्वेन चोदना।।६।।

## भाषा टीका

पूर्व सूत्र में सदाशिव कला का अन्तः प्राधान्य तथा ईश्वर कला का बाह्य प्राधान्य प्रतिपादित किया गया है। इस सूत्र में इच्छात्मक शक्ति की, ज्ञान तथा क्रिया उभय का मूल होने से, बहिः एवं अन्तः दोनों दशाओं में प्रधानता प्रतिपादित की गई है।

## व्याख्या

शक्तिदशा प वर्ग एवं व-कार के बिन्दुत्व से युक्त, सङ्कोच त्याग रूप है; जिसका ह-कार द्वारा अभिव्यञ्जन होता है। शक्ति का स्वभाव इच्छात्मक है। ज्ञान-क्रिया का समत्व इच्छा शक्ति है। इस इच्छा शक्ति के बिना न विज्ञान का प्रवर्तन होता है और न ही क्रिया का प्रवर्तन होता है। ज्ञान एवं क्रिया का आन्तर-कूटस्थ स्वरूप इच्छा है। अतः ज्ञान एव क्रिया दोनों की आत्मा अर्थात् मूल-इच्छा है। अतएव अन्तः ज्ञान-पद एवं वहिः क्रिया-पद दोनों में इच्छा का प्राधान्य है। इच्छा दोनों पदों में अङ्गी है; अङ्ग नहीं है।

विसर्ग-पद में विद्यादि क्रम से जब बिन्दु का उन्मेष होता है तब समस्त पद में जब तक बिन्दु व्याप्त नहीं हो जाता है; तब तक इस अवस्था में भी बिन्दु के साथ विसर्ग का मूल रूप से अस्तित्व रहता है अतएव यह संसृष्टि बिन्दु एवं विसर्गमय है; केवल बिन्दु का एकाधिपत्य नहीं है। सूत्र के द्वितीय चरण में इस सिद्धान्त का प्रतिपादन किया गया है।

विसर्ग-पद में क्रम से बिन्दु की उन्मेष अवस्था के प्रारम्भ से सर्वत्र बिन्दु की व्याप्ति की निष्पत्ति होने तक, संसृष्टि बिन्दु एवं विसर्ग मय होती है। त्रिपुटी रूप पद में कहीं बिन्दु का उन्मेष होता है तथा कहीं विसर्ग की स्फुरता होती है, संसृष्टि का यही क्रम है। टीकाकार इस सिद्धान्त का किंञ्चित् विस्तार से प्रतिपादन करते हैं।

शुद्ध-विद्या प्रमाता में जब इन्द्रिय-प्रकाश के अन्तर्गत वेद्य का लय हो जाता है तब वेद्यांश के रूप में ही चित् का समुन्मेष होता है। इस दशा में इन्द्रियों का प्रमातृ पद में लय तो हो जाता है किन्तु अभ्यास में दक्षता का अभाव रहता है अतएव इन्द्रियादिक से उत्तीर्ण पद में भेद का शमन नहीं होता है अतएव विसर्ग की स्फुरता स्थित रहती है इस कारण यहां बिन्दु एवं विसर्ग दोनों की संसृष्टि हैं। शुद्ध-विद्या से उत्तीर्ण होने के कारण ईश्वर पद के अन्तर्गत

प्रमेयानुभूति में चित् का उन्मेष सिद्ध है। ईश्वर दशा में विषयों को आत्मसात करके कर्मेन्द्रियों का निमज्जन विशेषतया देहात्मक प्रमाता में होता है।

अपने विषयों को आत्मसात कर जब ज्ञानेन्द्रियाँ आत्मरूप प्रमाता में लय हो जाती हैं तब आत्मा के प्राधान्य के कारण साधक के अपाटव (अदक्षता) का प्रश्न अप्रधान बन जाता है; इस प्रकार उत्तर पद में अप्रधान रूप से भेद का स्फुरण होता रहता है। इस कारण यह संसृष्टि विसर्गात्मक है। अतः सदाशिव से ईश्वर पर्यन्त दशाओं में चित् का अभेद उन्मेष सिद्ध है।

जब विश्वमय स्वात्म-प्रमातृ पद में ज्ञेय के सहित ज्ञानेन्द्रियों का विशेषतया लय हो जाता है तब सदाशिव दशा का भी निराकुल चित् विश्रान्ति रूप इच्छा शक्ति में एकात्म्य हो जाता है किन्तु इस दशा में भी भेद का अंश अवशेष रहता है। अतएव विश्रांति रूप होने से अपरिच्छिन्न शक्तिदशा में ही केवल अभेद का साम्राज्य रहता है यह निष्कर्ष सिद्ध होता है।

विसर्गानुवृत्ति के तारतम्य के विवेक से युक्त बिन्दु की उन्मेष दशा शुद्ध-विद्या आदि तत्त्वों के प्रस्फुट ज्ञान का कारण है अतः बिन्दु की उपासना का आदेश शास्त्रों में है।

## सप्तमं सूत्रम्

**पूर्वत्र नैव हि परोनियत परत्र**
**पूर्वो भवेन्नियत एव शषादिबृन्दे।**
**एकत्र संविदुदयेऽप्यपरत्रभासस्तस्या**
**इतीदमथवा सममेवबिन्दुः।।७।।**

### व्याख्या

**शुद्धविद्यादिषु बहिर्बहिर्दशायां अन्तरन्तर्दशानान्तर्भवन्ति (ति)। अन्तरन्तर्दशायां तु बहिर्बहिर्दशान्तर्भवतीतिव्युत्पादयति। पूर्वत्रेत्यादि। शषादि बृन्दे शषादिप्रतिपाद्ये शुद्धविद्यादि बृन्दे पूर्वत्र शुद्धविद्यादौ पूर्वदशायां परः परदशा नैव हि नियतः न नियता। शुद्धविद्यायामीश्वरदशा न नियता। ईश्वरदशायाञ्च सदाशिवदशा। सदाशिवदशायां शक्तिदशा च तथेत्यर्थः। परत्र तु ईश्वरादि दक्षायान्तु पूर्वः। शुद्धविद्यादिदशानियत एव भवेत्। नियमेनभवेदेव।**

**ईश्वरदशायांशुद्धविद्यादशान्तर्भूता भूतास्त्येव। सदाशिवदशायाञ्चेश्वरदशा। शक्तिदशायाञ्च सदाशिव दशेतियोजना। इदानीं वेद्योपक्रमेण संविदुदये क्रमं बिना वेद्यादि प्रतिपादकं सर्वमपि शषादिबृन्दं संविन्मयूखानां निराघट (निर्बाध) प्रसरणेन युगपदेव सङ्कोचति त्यजतीति पक्षान्तरमुपक्षिपति एकत्रेति। एकत्र वेद्यभागे संविदुदये सति। अपरत्रापिप्रमाणादि पदे सर्वत्रापि तस्याः संविदो भास इति। भासः प्रवहन्तीतिशेषः। इदं शषादिबृन्दं शषाद्यक्षर चतुष्टयं अथवापक्षान्तरेण सममेवयुगपदेव बिन्दुःविन्दुशब्देन त्यक्त सङ्कोचत्व लक्ष्यते। त्यक्त सङ्कोचो भवतीतिशेषः। अयमर्थ वेद्यपदोपक्रमेण बिन्दून्मेषे शुद्धविद्यादिदशानां कालविलम्वापेक्षः क्रमो न नियतः। क्वचित्प्रमातरि भाग्याधिके शक्तिपातस्य तीव्रतया शुद्धविद्यादिदशानां निर्विलम्बेन क्षणादाविर्भावोयुगपदेव सम्भबति। क्वचित्तु क्रमापेक्षया शनैः सम्भवतीति पक्षद्वयमत्रानुसन्धेयम्।।७।।**

## भाषा टीका

## व्याख्या

श-ष-आदि वर्ण समूह द्वारा प्रतिपाद्य शुद्ध-विद्या आदि पूर्व दशाओं में परदशा नियत नहीं होती है। अर्थात् शुद्ध-विद्या में ईश्वर-दशा नियत नहीं है, ईश्वरदशा में सदाशिव-दशा, तथा सदाशिव-दशा में शक्ति-दशा नियत नहीं है। परत्र अर्थात् ईश्वर आदि दशाओं में पूर्व दशा शुद्धविद्या नियत है। अर्थात् ईश्वर-दशा में शुद्ध-विद्या दशा अन्तर्भूत है। इसी प्रकार सदाशिव-दशा में ईश्वर-दशा अन्तर्निहित है। तथा शक्ति-दशा में सदाशिव-दशा नियत है।

वेद्य के उपक्रम से जब संवित् का उदय होता है तब वेद्य आदि के प्रतिपादक समस्त श, ष, स, ह वर्णों में संवित् की मयूखों के निर्बाध प्रसरण से एक समय में ही (युगपत्) दशाओं का सङ्कोच एवं त्याग हो जाता है। अर्थात् जब वेद्य में संवित् का उदय होता है तब अपरत्र प्रमाणादि पद में भी सर्वत्र संविद् का भास हो जाता है।

अथवा अन्य पक्ष भी है कि बिन्दु से ही सङ्कोच त्यागलक्षित होता है। वेद्य के उपक्रम में संवित् का उदय होने पर एक काल में ही समस्त चारों तत्त्वों के सङ्कोच का त्याग हो जाता है अर्थात् शुद्ध-विद्या आदि के विलय क्रम में काल के क्रम की अपेक्षा नहीं रहती है। कहीं भाग्य की प्रवलता से तीव्र शक्तिपात के कारण शुद्ध-विद्या आदि दशाओं का निर्विलम्ब क्षण मात्र

में ही आविर्भाव सम्भव हो जाता है; कहीं क्रम की अपेक्षा से शनैः शनैः सम्भव होता है।

## अष्टमं सूत्रम्

जाग्रच्छिवस्य पशुजागरयुक्तदेश-
मन्तर्दशारमिह कोणगतंबहुत्वम्।
भेदोदयोल्लसितमेतदभेदकोट्यां
प्राप्नोति संग्रहमिति प्रतिपद्रहस्यम्।।८।।

### व्याख्या

इदानीं शकाराद्यक्षर चतुष्ट्याधिष्ठातुरीश्वरस्य वह्न्यक्षर सन्निवेशवति दशारयुग्म रूपे पशु जागर चक्रे कथं सन्निवेशौचित्यमित्याशङ्का तदुपपादयति। जाग्रदित्यादि। शिवस्य जाग्रत् जाग्रदवस्था पशु जागर युक् पशुजागरावस्थया युक् योगिनी यतः शिलष्टमित्यर्थः। (तत्) तस्मात्कारणादन्तर्दशारं दशेन्द्रिय सन्निवेशपदव्याप्य दशारं ऐश ईश्वराधिष्ठातृकम्। इहेश्वराधिष्ठातृके दशार चक्रपदे भेदोदयोल्लसितं भेदविजृम्भणेन समुदञ्चितं यत्कोणगतं बहुत्वं कोण बाहुल्यं एतदभेद कोट्यां अभेद पक्षाविर्भावे सग्रहम्। अभेद पदोचितं बाहुल्य त्यागं प्राप्नोतीति प्रतिपद्रहस्यं ज्ञानरहस्यम्। अयमर्थः विसर्गव्याप्तौ सकलभेद समुज्जृम्भस्थले चुतुर्विंशत्यक्षरात्मके स्पर्श कदम्बके पञ्चवर्ग संविभक्तं यत्पञ्चाङ्गकं पदं चतुरस्रं दशारयुग्मस्य चतुर्षु कोणपञ्चकेषु व्यवस्थितम्। पशु जागरे शिवजागरेतु भेद संक्षयेसति चतुरस्रपदं पादि वर्णचतुष्टयं हकारत्वेन परिगण्यते। बहिर्दशार कोण पञ्चकगतः कवर्गश्च हकारेऽन्तर्भवति। अवशिष्ट कोणपञ्चक गतश्चवर्गः शकारत्वेन परिणमति। अन्तर्दशारे कोण पञ्चकगतष्टवर्गः षकारत्वेन परिणमति। अवशिष्ट कोण पञ्चकगतस्तवर्गः सकारत्वेन परिणमति। मकारो हकार रूपेण परिणामिनि प-वर्गे च सम्बन्धमुपलभते। प्रमातृ कक्ष्यायाञ्चवक्ष्यमाण त्रिकोण बिम्बे संबंधमुपलभतइति। विसर्गपदे बिंद्वाविर्भाव-प्रक्रिया चतुरस्र दशारयुग्म रूपं चक्रत्रयं कोणचतुष्टय्याकारेण परिणमति। विसर्गपदे बिंदुपदे च वर्णानां कोणानां चैकरूप्येण भवितव्यमिति ये मन्यन्ते ते भेदाभेददशयोरप्यवशेषं प्रतिपद्यंत इत्यलम्।।८।।

## भाषा टीका

### सूत्रसार -

श्रीचक्र में पशु जाग्रत् अवस्था के द्योतक दशार चक्र को बहुत अक्षरों से युक्त दर्शाया गया है। अन्तर्दशार चक्र-दश इन्द्रियों का द्योतक है, जिसका अधिष्ठाता ईश्वर है, किन्तु ईश्वर-तत्त्व को विगत सूत्र में श, ष, स, ह अक्षरों का अधिष्ठाता दर्शाया गया है। अतः शकार आदि चार अक्षरों के अधिष्ठाता ईश्वर-तत्त्व का बहु अक्षरों से युक्त दशार चक्र में सन्निवेश शंका का विषय हो जाता है जिसका का औचित्य इस पद में प्रतिपादित किया गया है।

## व्याख्या

शिव की जाग्रत् अवस्था पशु की जाग्रत् अवस्था से संयुक्त है। इस कारण से अन्तर्दशार का अधिष्ठाता ईश्वर है। इस दशा में भेद का उल्लास होता है अतः कोणों का बाहुल्य है।

जब अभेद पक्ष का आविर्भाव होता है जब कोणों के बाहुल्य का त्याग हो जाता है यह ज्ञान मार्ग का रहस्य है। इसका तात्पर्य है कि समस्त भेद सृष्टि की जन्म स्थल विसर्ग व्याप्ति दशा में स्पर्श वर्ण कदम्बक के क से भ पर्यन्त चौबीस अक्षर पाँच वर्गों में विभक्त हैं जो पञ्चाङ्गक पद के नाम से कहा गया है। इस पञ्चाङ्गक पद की व्यवस्था दशारद्वय के चार कोण-पञ्चकों में की गई है।

जब पशु-जाग्रद् अवस्था तथा शिव जाग्रद् अवस्था के भेद की समाप्ति हो जाती है तब प, फ, ब, भ, चार वर्णों से युक्त चतुस्त्र पद हकार में परिणत हो जाता है तथा बहिर्दशार के पाँच कोणों में चित्रित क-वर्ग ह-कार में अन्तर्भाव हो जाता है।

दशार के कोण-पञ्चक के अवशिष्ट वर्गों में से च-वर्ग श-कार के रूप में, ट वर्ग ष-कार के रूप में तथा त वर्ग स-कार के रूप में परिणत हो जाता है। ह-कार के रूप में परिणत प वर्ग के अंतर्गत म-कार का संबंध उपलब्ध होता है।

विसर्ग पद में बिन्दु के आविर्भाव की प्रक्रिया चतुरस्त्र अन्तर्दशार तथा बहिर्दशार के अभिव्यञ्जक तीन चक्रों को कोण चतुष्ट्य के आकार में परिणत कर देती है। जो विसर्ग पद तथा बिन्दु पद में वर्णों तथा कोणों को एक रूप मानते हैं वे सिद्धांती भेदाभेद दशाओं को भी एक रूप प्रतिपादित करते हैं।

# नवमं सूत्रम्

यः पार्थिवेचिदुदयः स हि शुद्धविद्या
यः प्राकृते सपुनरीश्वरता किलाण्डे।
यो मायिकं स तु सदाशिवतेति शादे-
स्त्रैरूप्यधीरिहरहस्यतमं गुरूणाम्।।९।।

## व्याख्या

इदानीं पक्षान्तराश्रयणेन इन्द्रियदेहात्मनि मज्जित प्रपञ्चानां शुद्धविद्येश्वर सदाशिवानां पृथ्वी (भूः) प्रकृतिमायान्ताश्चिन्मयीकृता विषया इत्युपकल्पयति। यः पार्थिवेत्यादि। बहिरिन्द्रियविषयरूपेपार्थिवाण्डेयश्चिदुदयः चिद्व्याप्तिः स हि सखलु बिन्दूदयः शुद्धविद्या। यामिन्द्रियप्रकाशरेकाकारीकृतप्रमेयत्व लक्षणात्। पार्थिवाण्डे प्रमातृस्थानीयः प वर्गः सम्बन्धवान् एव। त्रिपुट्यांनित्यं तत्सम्बन्ध नियमात्। अतस्त्यक्तसङ्कोचेपार्थिवाण्डे चतुर्वर्णरूपस्यसर्वस्य शवर्गस्यसम्भवः। एवञ्चास्मिन्पक्षे शुद्धविद्याप्रमातुर्भेदप्रशमोपक्रमपदत्वात्। पशुजाग्रच्च त्रिकोण-बाहुल्ये सत्येवसन्निवेशोपपत्तिरिति च विसर्गस्पर्शाः शवर्गाकारेणपरिणमदवस्था शुद्धविद्या प्रमातरिभेदशिरो दर्शनमुप लभन्त इति मुख्यया वृत्याविश्वस्यैव शिवजाग्रत्पशुजाग्रच्चक्र संश्लेषः। शुद्धविद्या (या) सत्वपरिणतविवेका-नामङ्गीकाराय पाक्षिकस्तत्संश्लेष इत्यलम्। यः प्राकृतेण्डे चिदुदयः शवर्गा-कारेणसङ्कोचत्यागः स पुनरीश्वरताकिल। अत्रोपपत्ते प्रतिभासमात्र गम्यत्वात्। किलेति साम्प्रदायिकमैतिह्यम्। अत्रपवर्गस्य शवर्गाकारेण सङ्कोचत्याग एवमभ्यूह्यः। मकारस्योष्ठ्य वर्णस्यसङ्कोच त्यागः कण्ठ्यवर्णोहकार इतिसुगमम्। पकारस्य प्रकृतिवर्णस्यहकारे चित्पदेऽन्त र्भावः। फकारादिवर्णत्रयस्य शकारादि वर्णत्रयत्वे युक्तिरुच्यते। फकारबकार भकारा जलाग्नि वायवः। शकारषकार सकाराश्च तथा। अतः फकारादिसङ्कोच त्यागरूपत्वं शकारादीणाम् समानतत्वप्रतिपादकत्वात् शकारादीनाम्जलादि-प्रतिपादकत्वम् प्रागुक्तभूतवैपरीत्याभाव विमर्शेस्फुटं फकारादीनांरूपमुच्यते। अल्पप्राणो वर्ग प्रथम वर्णः अल्पवृत्तिश्चेतरभूतापेक्षया पृथिवी अतस्तत्प्रतिपाठिका। महाप्राणो वर्ग द्वितीयवर्णः पृथिव्यपेक्षया महावृत्ति च जलम्। अतस्तत्प्रतिपादकः नादवान्वर्गतृतीयवर्ण महाप्रणान्नादोऽधिकवृत्तिः। जलादधिकवर्ति वृत्तिश्चाग्निः। अतः सः तत्प्रदिपादकः। नादवान्घोषवांश्च वर्ग

**चतुर्थ वर्णः केवल नादवती (भवः नाद) नादवतीघोषवान्अधिकवृत्तिः। अग्नेरधिकवृत्तिश्च वायुः। अतस्तत्प्रतिपादकः उक्त सकल धर्मसंसृष्टि रूप पवर्ग पञ्चमं। अतः पृथिव्यादिभ्यश्चतुर्भ्योऽचतभ्योऽधिकवृत्तिराकाशः। अतःपञ्चम-वर्णः आकाशप्रतिपादक इति। अतः फकारादिप्रतिपाद्यतत्व प्रतिपादकतया सङ्कोचत्यागरूपत्वाच्च शकारादयः फकारादि परिणतिरूपा इति लभ्यते। ईश्वरस्य विश्वमयप्रकृत्यभिमानलक्षणत्वात्त्यक्तसङ्कोचं प्रकृत्यण्डमीश्वरपदत्वमर्हतीत्य-भिप्रायः। यो मायिकेण्डेचिदुदयःस तु सदाशिवता मायिकाण्डस्य स्वप्नस्य आत्मप्रकाशपदत्वात् सदाशिवस्य विश्वात्मत्वलक्षणात्यक्तसङ्कोचो मायाण्डः सदाशिवपदमिति। शादेः शकारादिवर्ण चतुष्टयस्य। त्रैरूप्यधीः पृथिव्यण्डे-प्रकृत्यण्डे मायाण्डे च सिद्धस्य त्रैरूप्यस्य ऐकरूप्ये सत्येव स्नानकृतत्रैविध्यस्य याथी र्विवेकः। साधीरिह शुद्धविद्यादिदशाविवेकप्रस्तावे गुरुणां रहस्यतममतिरहस्यम्।।९।।**

## भाषा टीका

## सूत्रसार -

शुद्ध विद्या ईश्वर सदाशिव रूप इन्द्रिय, देह तथा आत्मा में निमज्जित प्रपञ्च के अन्तर्गत पृथ्वी, प्रकृति एवं माया पर्यन्त चिन्मयीकृत विषयों का प्रकारान्तर से प्रतिपादन करते हैं।

## व्याख्या

"यः पार्थिवं" :- बाह्य इंद्रियों के विषय स्वरूप पार्थिव अण्ड में जो चित् की व्याप्ति होती है वह विन्दु का उदय है, जिस को शुद्ध-विद्या के नाम से सम्बोधित किया गया है। जैसा कि पूर्व में प्रतिपादित किया गया है कि शुद्ध-विद्या में दश इन्द्रियों के प्रकाश के साथ प्रमेय का एकीकरण हो जाता है जिसके कारण विसर्ग का अन्त होकर बिन्दु का उदय होता है।

पार्थिव-अण्ड से प्रमातृ-स्थानीय प-वर्ग का सम्बन्ध है। सिद्धान्ततः अहङ्कार, बुद्धि तथा मन रूप त्रिपुटी से प्रमाता म-कार का नित्य सम्बन्ध है। अतएव पार्थिव-अण्ड के सङ्कोच के त्याग की अवस्था में चतुर्वर्णात्मक समस्त श-वर्ग की उत्पत्ति होती है। तात्पर्य यह कि प-वर्ग के तीन अक्षर फ, ब, भ क्रमशः अहङ्कार, बुद्धि तथा मन के द्योतक हैं। इस त्रिपुटी से प्रमातृ-स्थानीय

म-कार का नित्य सम्बन्ध है। अर्थात् मकार-रूप चित का समावेश त्रिपुटी में अविना भाव रूप से है। अतएव जब पार्थिव-अण्ड की सङ्कोचावस्था का अन्त हो जाता है तब शुद्ध-विद्या तत्त्व में श, ष, स, ह चतुर्वर्णात्मक समस्त श-वर्ग का प्रादुर्भाव होता है।

इस प्रकार टीकाकार के मत के अनुसार शुद्ध-विद्या प्रमाता में भेद के शमन का उपक्रम होता है अतः पशु-जाग्रत् में त्रिकोण के बाहुल्य के होते हुए भी शुद्ध-विद्या के अन्तर्गत श-वर्ग की केवल उपपत्तिमात्र होती है; एवं यह अवस्था विसर्ग-स्पर्श के श-वर्ग रूप में परिणत होने की अन्तर्कालीन अवस्था है। अर्थात् शुद्ध-विद्या में भेद का दर्शन शेष रह जाता है अतएव मुख्यावृत्ति से ईश्वर तत्त्व का ही शिव-जाग्रत् एवं पशु-जाग्रत् चक्रों में संश्लेश है, शुद्ध-विद्या में केवल पाक्षिक संश्लेश है क्योंकि इस दशा में पूर्ण विवेक का उदय नहीं होता है।

"यः प्राकृते अण्डे" :- प्राकृत-अण्ड में चिदोदय ईश्वर तत्त्व है। प्राकृत-अण्ड का अन्त होने पर जब चित् का उदय होता है तब प्रकृति के द्योतक स्पर्श-वर्णों के सङ्कोच का त्याग होकर श-वर्ग में परिवर्तन हो जाता है; यही ईश्वरता है।

श-वर्ग के आकार में प-वर्ग के सङ्कोच-त्याग का विवरण इस प्रकार है :- ओष्ठ वर्ण म-कार के सङ्कोच का त्याग कण्ठद्वारा उच्चारित ह-कार वर्ण में हो जाता है। प्रकृति वर्ण प-कार का चित्पद हकार में अन्तर्भाव हो जाता है। फ-कार, ब-कार तथा भ-कार क्रमशः जल, अग्नि एवं वायु के द्योतक हैं। इसी प्रकार श, ष, स भी क्रमशः जल, अग्नि, वायु के द्योतक हैं, अतः समान तत्त्वों के प्रतिपादक होने के कारण फ-कार आदि वर्णों के सङ्कोच का त्याग होने पर श, ष, स में परिवर्तन हो जाता है।

पूर्वोक्त तत्त्वों के वैपरीत्य अर्थात् अभाव-विमर्श के अन्तर्गत फ-कार आदि के रूप का कथन करते हैं। वर्ग का प्रथम अक्षर प-कार अल्प प्राण है। अन्य भूतों की अपेक्षा पृथ्वी में प्राण की अल्प वृत्ति है अतः प-कार पृथ्वी का प्रतिपादक है। वर्ग का द्वितीय वर्ण फ-कार महाप्राण है, पृथ्वी की अपेक्षा जल में प्राण की वृत्ति अधिक है; अतः फ वर्ण जल का प्रतिपादक है। वर्ग का तृतीय वर्ण ब-कार महाप्राण फ-कार से अधिक नाद-युक्त है, जल से अग्नि में नाद की वृत्ति अधिक होती है, अतः ब-कार अग्नि का प्रतिपादक है। वर्ग का चतुर्थ अक्षर भ-कार नाद एवं घोष दोनों से युक्त है। केवल नादवान तत्त्व से नादवान एवं घोषवान तत्त्व में प्राण की

वृत्ति अधिक होती है; अर्थात् अग्नि से वायु में प्राण की अधिक वृत्ति है, अतएव अधिक वृत्ति के आधार पर भ-कार वायु का प्रतिपादक है। उपर्युक्त प्रकार से प-वर्ग पञ्चक स-कल धर्म की संसृष्टि का स्वरूप है। आकाश की प्राण वृत्ति पृथ्वी आदि तत्त्वों की वृत्ति से अधिक है अतः पञ्चम वर्ण म-कार आकाश तत्त्व का प्रतिपादक है।

इस प्रकाश श, ष, स वर्ण एवं फ, ब, भ वर्ण समान तत्त्वों के प्रतिपादक हैं, एवं दोनों ही वर्गों के स्वरूप में सङ्कोच का अन्त हो जाता है। अतः इन दोनों कारणों के आधार से टीकाकार ने शकार आदि को फकार आदि का परिणत रूप सिद्ध किया है।

विश्वमय प्रकृति का अभिमानवान ईश्वर है, इस परिभाषा के अनुसार सङ्कोच के त्याग हो जाने पर प्रकृति-अण्ड ईश्वरपद की योग्यता को प्राप्त करता है। मायिक-अण्ड में जो चित् का उदय होता है उसको सदा-शिव-पद कहा गया है। शकारादि के द्वारा पार्थिव-अण्ड, प्रकृति-अण्ड तथा मायाण्ड के अन्तर्गत स्थान भेद से प्रतिपादित त्रिरूप की एक रूपता का, शुद्ध-विद्या के प्रस्ताव में, जो प्रतिपादन किया गया है; वह गुरु-परम्परा का अत्यन्त गूढ़ रहस्य है।

## टिप्पणी -

प्रयत्न के द्वारा वर्णों का उच्चारण होता है। यह प्रयत्न व्याकरण शास्त्र के अनुसार दो प्रकार का है। (१) **आभ्यन्तर प्रयत्न** एवं **बाह्य प्रयत्न**। आभ्यन्तर प्रयत्न पांच प्रकार का है। १) स्पृष्ट, २) ईषत्-स्पृष्ट, ३) ईषत्-विवृत, ४) विवृत, ५) संवृत-आभ्यन्तर प्रयत्न के भेद हैं। प्रथम खण्ड के तृतीय श्लोक की टीका में इसका विस्तृत विवेचन है।

**वाह्य-प्रयत्न** एकादश प्रकार के हैं १) विवारः, २) संवार, ३) श्वास, ४) नाद, ५) घोष, ६) अघोष, ७) अल्प-प्राण, ८) महाप्रमाण, ९) उदात्त, १०) अनुदात्त एवं ११) स्वरित-नामक एकादश भेद वाह्य-प्रयत्न के हैं।

इस सूत्र में सिद्ध किया है कि निवृत्त्यात्मक-प्रवाह में प-वर्ग के प, फ, ब, भ वर्ण श, ष, स, ह वर्णों में परिणत हो जाते हैं। इस सिद्धान्त को प्रतिपादित करने के लिये टीकाकार ने वर्णों के उच्चारण के बाह्य प्रयत्न का आश्रय लिया है। प्राण की न्यूनता एवं अधिकता के आधार पर वर्णों के द्वारा प्रतिपादित तत्त्वों का अभिव्यञ्जन होता है। प-वर्ग अल्प-प्राण है, पृथ्वी में कठिनत्व अधिक

होने के कारण प्राण के लिये अल्प स्थान है; अतः पकार पृथ्वी तत्त्व का द्योतक है। इसी आधार पर फकार महाप्राण, बकार नाद तथा भकार नाद एवं घोषवान है। अतः उत्तरोत्तर प्राण के प्रयोग के आधिक्य के कारण फ जल का प्रतिपादक, ब अग्नि का प्रतिपादक, भ वायु का प्रतिपादक है एवं म आकाश का प्रतिपादक है। इसी प्रकार श, ष, स, ह, पृथ्वी, जल, अग्नि एवं वायु के प्रतिपादक हैं; अतः निवृत्ति की ओर प्रवाह होने पर पृथ्वी आदि प-वर्ग द्वारा प्रतिपादित तत्त्व शुद्ध-विद्या आदि श, ष, स, ह ऊष्माण वर्णों द्वारा प्रतिपाद्य तत्त्व में परिणत हो जाते हैं।

## दशमं सूत्रम्

बिन्दूदये विशति सर्ग इमं तथैव
सर्गोदये तथम सोऽपि पदे तदन्तः।
कः स्याद्धकार हृदिलश्च बकारगर्भे
बाह्ये तु चित्प्रकृतिसर्गमुखेविभक्ता।।१०।।

### व्याख्या

**इदानीं श-वर्गे कवर्गस्य देह प्रतिपादक लकारस्य शङ्का (सङ्कोच) त्यागरूपवर्णादर्शनात्। तद्दर्शनोपपत्तिमाह। बिन्दूदय इत्यादि। बिन्दूदये बिन्दुव्याप्तौ। इमं बिन्दु। पूर्वमेतत् व्यापकविसर्गो विशति। बिन्दावेकी भवतीत्यर्थः। पूर्वं बिन्दु गर्भादिव बहिर्विश्व सृष्टो विसर्गः पुनस्तमेव विशतीत्यर्थः। तथैव सर्गोदये विसर्ग व्याप्तौ तं विसर्गं अथानन्तरं सोऽपि बिन्दुरपि विशतीत्यर्थः। तत्तस्मात्कारणात् अन्तःपदे बिन्दु व्याप्ति स्थले। कः। जलादि भूतचतुष्टयप्रतिपादकेनपादिवर्णचतुष्टयेनात्त गर्भः। पृथिवौ प्रतिपादकः ककारोः हकार हृदिस्यात् तत्रान्तर्गतो भवतीत्यर्थः। स्वप्नस्याप्यान्तर्पदत्वात् तत्रापि विसर्ग प्रमातुर्लकारस्य गर्भे स्थितिमाह। ल श वकारगर्भ इति। लः लकारो वकारगर्भे च चकारात् हकारगर्भे च अन्तस्थ सङ्कोच त्यागरूपे श वर्गे च हकार गर्भे लकारान्तर्धानं भवतीत्यर्थः। विसर्गस्य बिन्दुसमावेशे तदेक रसत्वमेव। बिन्दोविसर्ग समावेशे विशेषमाह। वाह्येत्विति। बाह्ये विसर्ग व्याप्ति स्थले तु चिद्बिन्दुः प्रकृति सर्ग मुखे प्रकृति रूपस्य विसर्गस्यमुखे सम्मुखे तिष्ठन्नपि विभक्ता प्रकृतौ नान्तर्भवति। अपि तु विभक्त रूपेण दृश्यते। मकारो हि पकार रूपिण्याः**

**प्रकृतेश्च तत्समीपस्थितिसूचितस्यावहिर्मोक्षणस्य कर्तैव, तया नान्तर्धीयते। न तत्रैकरस्यात्स्वरूपहार्निं लभते। पृथिवी रूपस्य विसर्ग बिन्दुना बहिर्विसृष्टस्य न बिन्द्वैकरसीकरणं पवर्गरूपे बिन्दोर्दर्शनात्। असो विसर्ग व्याप्तौ न बिन्दु स्वरूपतो लोप इति भावः।।१०।।**

## भाषा टीका

### सूत्रसार -

क-वर्ग तथा लकार के सङ्कोच-त्याग के द्योतक वर्ण का श-वर्ग में स्थान नहीं है अतः इसकी प्राप्ति के लिये युक्ति का निरूपण करते हैं।

## व्याख्या

बिन्दु के उदय होने पर इस में विसर्ग अन्तर्लीन अर्थात् एकाकार हो जाता है। प्रथम बिन्दु से ही विसर्ग का आविर्भाव होता है तथा विसर्ग में ही विलय हो जाता है। इसी प्रकार विसर्ग के उदय होने पर बिन्दु का विसर्ग में प्रवेश होता है। इस कारण से बिन्दु की व्याप्ति-दशा में जल आदि भूत चतुष्ट्य के प्रतिपादक पकार आदि वर्णचतुष्ट्य के गर्भ-गत पृथ्वी के प्रतिपादक ककार की हकार में परिणति हो जाती है।

स्वप्नावस्था भी आन्तर-पद होने के कारण यहाँ भी विसर्ग प्रमाता ल-कार का व-कार में लय होता है तथा व-कार का लय अन्तःस्थ वर्णो के सङ्कोच त्याग रूप श-वर्ग के अन्तर्गत ह-कार में होता है। बिन्दु के अन्तर्गत विसर्ग का एकरस अर्थात् तादात्म्य हो जाता है। किंतु विसर्ग के अंतर्गत विन्दु के समावेश में विशेषता रहती है।

वाह्य कक्षा में विसर्ग की व्याप्ति के अन्तर्गत बिन्दु का यद्यपि प्रकृति में समावेश होता है, तथापि यह समावेश पूर्ण नहीं है अपितु भेदरूप है।

यद्यपि म-कार की स्थिति प-कार से प्रतिपादित पृथ्वी के समीप है तथापि अन्तः अवस्था में म-कार मोक्षकर्ता है; इस कारण से विसर्ग के अन्तर्गत बिन्दु अन्तर्धान नहीं होता है तथा एकरस होकर अपने अस्तित्व को नहीं खोता है। पृथ्वी रूप विसर्ग की बिन्दु के बाहिर सृष्टि होती है अतः विन्दु का विसर्ग के साथ एक रसीकरण नहीं होता है तथा प-वर्ग के अन्तर्गत विन्दु रूप म-

कार का दर्शन होता है। अतएव विसर्ग व्याप्ति में विन्दु के स्वरूप का लोप नहीं होता है।

# एकादशं सूत्रम्

अन्तःपदंभवतित्तच्चतुरङ्गमैक्या-
च्चित्त्चैत्ययोः करणसीम्न्यपि भावितैक्यम्।
पञ्चाङ्गकंभवतिबाह्यपदप्रकृत्यां
चिद्वह्निगर्भकुहुरादथनिर्गतायाम्।।११।।

## व्याख्या

अथ विसर्गस्य विन्दुनिलयनान्तः पदस्य चतुरङ्गत्वं विसर्गबिन्दोरविलयेन बाह्य पदस्य पञ्चाङ्गत्वमिति प्रागुक्तमपि प्रमेयं प्रस्फुट प्रतिपत्तये पुनरुद्भासयति- अन्तरित्यादि। तत्तस्मात्कारणात् बिन्दौ विसर्ग निलयनरूपाद्धेतीः अन्तः पदं चतुरङ्गं भवति। कुत इत्याह। चिच्चैत्ययोरैक्यात्। चितश्चैवैकरसीकरणसामर्थ्य-सम्भवात् किंविधमन्तः पदं। करण सीमन्यपि भावितक्यं विसर्गः प्रमातुः सर्वव्यापिपदस्योपलक्षणेनचिन्मज्जनेत बहिर्भासमाने करणत्रयपदेऽपि विभावितचिदैक्यम्। विसर्गपदस्य कवर्गस्य हकार मज्जनेन उपलक्षणेन करणत्रयस्थानीय चवर्गटवर्गतवर्गसङ्कोच त्याग रूपाणां शषसनां हकारे निमज्जनमेवेति विभाव्यमित्यर्थः। तेषां यद्वहिस्फुरणेन शुद्धविद्यादिस्वरूपविवेचनं तद् हकारे निमज्जते। सत्येवेतिवेदितव्यम्। ततश्चामेदरूपंचित्यपदमेकाङ्गमेव शषसनांहकारनिमज्जनेनादर्शने शुद्धविद्या स्वरूपं न विज्ञायते इति। तद्विज्ञानाय हकारान्तार्गतानामेव तेषां बहिर्विभासनमिति वेदितव्यम्। अथ विसर्गस्पन्देचिद्वह्नि-गर्भकुहुरात्प्रकृत्यांविनिर्गतायां करणत्रयेण सहेत्यध्याहार्यम्। बाह्यपदं पञ्चाङ्गकंभवति। चैत्यस्य चित्यपदं बिनास्वरूपासिद्धेस्तत्रालुप्तेन चित्पदेन सहेत्यर्थः।।११।।

## भाषा टीका

### सूत्रसार -

सुषुप्ति प्रकरण में बिन्दु को चतुरङ्ग-पद तथा विसर्ग को पञ्चाङ्ग-पद

प्रतिपादित किया गया है। यहाँ इसी सिद्धान्त को स्पष्ट करने का प्रयास किया गया है। बिन्दु के अन्तर्गत विसर्ग का लोप हो जाता है अतः बिन्दु पद अ, इ, ऋ, लृ चार वर्णों से अभिव्यञ्जित है। विसर्ग-पद में बिन्दु का अस्तित्व पृथक् रहता है अतः अ, इ, उ, ऋ, ल वर्णों द्वारा विसर्ग-पद का प्रतिपादन किया गया है।

## व्याख्या

बिन्दु व्याप्ति में सर्व-व्यापि विसर्ग पद के चित् में निमज्जन से बाह्य अवभासित कारण-त्रय अर्थात् अहङ्कार, बुद्धि तथा मन का भी चित् में ऐक्य हो जाता है। विसर्ग-पद के क-वर्ग का हकार में निमज्जन हो जाता है। अतः इस उपलक्षण के अनुसार करण-त्रय-स्थानीय च-वर्ग, ट-वर्ग एवं त-वर्ग के सङ्कोच-त्याग रूप श, ष, स का भी हकार में निमज्जन स्वीकार करना उचित है। करण-त्रय के वाह्य स्फुरण होने पर शुद्ध-विद्या आदि के स्वरूप का जो बाह्य विवेचन किया जाता है उसका अन्तः दशा में हकार में निमज्जन हो जाता है; ऐसा सिद्धान्त है। अभेद-रूप चित्-पद एकाङ्गी है तथा श, ष, स का हकार में लय हो जाने से अवभास नहीं होता है; अतएव शुद्ध-विद्या आदि कां ज्ञान अन्तर-दशा में नहीं होता है। अतः यहाँ सिद्ध होता है कि हकार के अन्तः में स्थित शुद्ध-विद्या आदि का ही वाह्य विसर्ग दशा में अवभास होता है। इस प्रकार विसर्ग-स्पन्द में चित्-अग्नि के गर्भ-कुहुर से प्रकृति के निर्गमन होने के पश्चात् करण त्रय का आविर्भाव होता है। अतएव बाह्य-पद पङ्चाङ्गक सिद्ध है क्योंकि विसर्ग की चित्-पद के बिना सिद्धि सम्भव नहीं है तथा चित् का पृथक् बोध विसर्गं में दृष्टि-गम्य है।

तात्पर्य यह कि विसर्ग में प्रकृति, अहङ्कार, बुद्धि तथा मन के साथ पाँचवाँ तत्त्व चित् का भी पृथक् अनुभव होता है अतः विसर्ग में चित् सहित पाँच अङ्ग हैं।

# द्वादशं सूत्रम्

**ज्ञानक्रियोन्मुख हकारमयाद्वयेच्छा**
**विश्रान्तिरन्तर्बहिर्मुखविश्रमात्मा।**
**कूटाक्षरात्मतनुरेष शिवः सुषुप्ति**
**विश्रान्तिरेव स विकल्पकलाल्पगन्धा।।१२।।**

## व्याख्या

इदानीं शक्तिरूपस्य हकारस्य स्वरूपं विविच्य व्युत्पादयन् एतदुत्तरपदस्य लकार क्षकार रूप कूटाक्षर प्रतिपाद्यास्य शिवतत्वस्य स्वरूपमवबोधयति-ज्ञानेत्यादि। ज्ञानक्रियोन्मुखहकारमयाद्वयेच्छाविश्रान्तिः सदाशिवेश्वरात्मक योर्ज्ञानक्रिययोर्विषये उन्मुखः। तदधिष्ठातृत्वादित्यर्थः हकारमयाद्वयेच्छा हकार स्वरूपाभेदेच्छा। हकार प्रतिपाद्यत्वे हकार स्वरूपत्वादभेदेच्छायामाचरितम्। सैवेच्छा विश्रान्तिंरूपत्वाद्विश्रान्तिः। अयमर्थः-येयमपरिच्छिन्न ज्ञानक्रियात्मक सदाशिवेश्वरे स्वरूपज्ञानक्रियाकवणाधिष्ठातृ ज्ञानक्रिययोः कूटस्थत्वलक्षणेन तदधिष्ठातृत्वेनेच्छाव्यपदेशविषया ज्ञानक्रिया-कूटस्थत्वस्यैवेइच्छा लक्षण-त्वादिच्छास्वरूपिणी शक्तितत्वमित्यागमकैरुद्‌घोष्यमाणा द्वैतस्पृष्टिहिताकार-प्रतिपाद्या महाविश्रान्तिः। सैवान्तः पदे अबहिर्मुखविश्रमात्मा प्रपञ्चानभिमुखा विश्रान्ति रूपा। सविकल्प कलाल्पगन्धः। सुषुप्तिविश्रान्तिरेव स्वरूपानुभवमात्र-विकल्पयुक्ता सुषुप्तिरेवः कूटाक्षरात्मतनुः लकार क्षकारोभयैक्यरूप कूटाक्षरात्मकनिजस्वरूपः। तत्प्रतिपाद्य इत्यर्थः। एष अपरोक्षानुभव गोचरः। शिवः शिवतत्वं भवतीति शेषः। जाग्रत्येव सम्भवन्ति सोमादिसाधनता-भाग्यवशात् स्वतः प्रवृत्ता वा काचित् सुषुप्तिविश्रान्तिरन्तर्मुखीचेच्छिव तत्वं भवति। सैव बहिर्मुखी चेच्छक्ति तत्वं भवतीति विवेकः।।१२।।

## भाषा टीका

### सूत्रसार -

उपर्युक्त ग्यारहवें सूत्र में शक्ति-रूप हकार का विवेचन करने के पश्चात् उत्तरपद ल-कार तथा क्ष-कार कूटाक्षरों द्वारा प्रतिपादित शिव-तत्त्व का विवेचन करते हैं।

## व्याख्या

प्रथम विश्रान्ति की परिभाषा करते हैं। ज्ञान एवं क्रिया की ओर उन्मुख ह-कारमय अद्वय इच्छा विश्रान्ति है। ह-कार अर्थात् शक्ति-तत्त्व सदाशिव एवं ईश्वर-तत्त्व का अधिष्ठाता है तथा ज्ञान एवं क्रिया क्रमशः सदाशिव एवं ईश्वरात्मक है अतः यहाँ ज्ञान क्रिया की ओर उन्मुख शक्ति रूप ह-कार को विश्रान्ति कहा गया है। अद्वय इच्छा विश्रान्ति रूप है, अतः इसको विश्रान्ति के नाम से ही सम्बोधित किया गया है।

इसका तात्पर्य है कि इच्छा-शक्ति ज्ञान एवं क्रिया के मध्य कूटस्थ है। इस कारण से अपरिच्छिन्न ज्ञान-क्रियात्मक सदाशिव एवं ईश्वर-तत्त्व में स्वरूप के ज्ञान, क्रिया एवं करण की अधिष्ठातृ इच्छा-शक्ति है जिसका आगम शास्त्र में द्वैत-स्पृष्टि से रहित अ-कार के द्वारा प्रतिपादन किया गया है। इस अद्वयात्मक इच्छा-शक्ति का नाम महाविश्रान्ति है। प्रपञ्च से पराङ्मुख यही इच्छा-शक्ति अन्त दशा में विश्रान्ति रूप प्रतिपादित की गई है।

अन्वय – "सविकल्पकलाल्पगंधा कूटाक्षरात्मतनुः सुषुप्तिविश्रांतिरेव शिव."

सूत्र के उत्तरार्ध में शिव का प्रतिपादन है। सविकल्प कला की गन्ध से युक्त अर्थात् स्वरूप के अनुभव मात्र विकल्प से युक्त सुषुप्ति-विश्रान्ति ही शिव-तत्त्व है, जिसके स्वरूप का प्रतिपादन एक रूप लकार एवं क्ष-कार कूटाक्षरों द्वारा होता है। अर्थात् सम्मिलित ल एवं क्ष वर्ण शिव के द्योतक है। जाग्रत्-अवस्था में सम्पादित सोम आदि साधनता अर्थात् भाग्यवश स्वतः प्रवृत्त कोई अन्तर्मुखी सुषुप्ति-विश्रान्ति अवस्था शिवत्व को प्राप्त करती है, एवं बहिर्मुख वही सुषुप्ति-विश्रान्ति अवस्था शक्ति-तत्त्व है।

## त्रयोदशं सूत्रम्

**नास्त्यस्तिवेत्त्युदित संशय जाग्रतीह-**
**सुप्तौ शिवे (भवति) जाग्रदभेदरूपम्।**
**ज्ञानक्रियात्मकतया प्रतिरूपभिन्न-**
**मेवं चतुर्विधमधिश्रित बीजमात्रम्।।१३।।**

### व्याख्या

**अथान्तर्मुखजाग्रत्सुषुप्तिविश्रान्तिरूपस्य शिवस्य जडसुषुप्ति विश्रान्ति-निरूपायाः स्वरप्रतिपाद्यायाः शक्तेरिव जगत्कारणत्वेन तत्वजगद्बीज-स्थित्यौचित्यमिति तदवस्थानं कूटाक्षर रूपेण विभाव्यमानं व्युत्पादयति। नास्तीत्यादि। नास्त्यस्तिवेत्युदितसंशयजाग्रति नास्त्यस्तिवेत्युद्भूतसशयः। जाग्रत्यत्र हहि सुप्तौ अस्ति वा नास्तिवेति संशयगोचरेण निर्देशितायांसुषुप्तावित्यर्थः। शिवे तादृक् सुषुप्ति रूपे शिवे। अभेदरूपमपि अथेत्येवं भिन्नम् एवं सम्भूय चतुर्विध जगत् अधिश्रितबीजमात्रं बीजमात्रेणाधिश्रितं भवतीतिशेषः। अयमर्थः**

स्वप्नरूपेऽन्तः पदे भेदज्ञानरूपं जाग्रद्रूपे बहिः पदे भेदक्रियारूपं, तथैव स्वप्न रूपेऽन्तःपदेऽभेदज्ञानरूपं जाग्रद्रूपे बहिः पदे भेदक्रियारूपमितिसंग्रहेण जगच्चतुर्विधम्। तदेव शिवतत्वे कूटाक्षर रूपेण बीजमात्रं तिष्ठतीति व्युत्पादितम्।।१३।।

## भाषा टीका

### सूत्रसार -

जिस प्रकार स्वर द्वारा प्रतिपाद्य जड़-सुषुप्ति-विश्रांति रूप शक्ति-तत्त्व जगत् का कारण है, उसी प्रकार अन्तर्मुख जाग्रत्-सुषुप्ति विश्रांति रूप शिव भी जगत् का कारण होने से तत्त्वात्तमक जगत् का बीज है। इस सिद्धान्त को दर्शाने हेतु ही शिव को कूटाक्षर रूप कहा है।

### व्याख्या

जाग्रदावस्था में यह संदेह होता है कि जगत् है अथवा नहीं है; इसी प्रकार सुषुप्ति में भी जगत् के नास्ति व अस्ति के संशय का उद्भव होता है। सुषुप्ति-विश्रान्ति रूप अभेद शिवावस्था में चतुर्विध भेद-रूप जगत् केवल बीज-रूप से आश्रित रहता है; इसका तात्पर्य है कि जगत् स्वप्नात्मक अन्तःपद में भेद ज्ञान रूप, जाग्रदात्मक बहिःपद में भेद-क्रिया रूप, स्वप्नात्मक अन्तःपद में अभेद-ज्ञान रूप एवं जाग्रदात्मक वहिःपद में अभेद-क्रिया रूप चार प्रकार का है। वही जगत् शिव-तत्त्व में कूटाक्षर के रूप में बीजमात्र अवशिष्ट रह जाता है।

## चतुर्दशं सूत्रम्

ज्ञानं द्वयाद्वयमयं लसकाररूपं
तादृक् च कर्म क षकारमयंविदुस्तत्।
श्लिष्टं पुरः स्फुरित सद्वयकोटिलक्ष
रूपं परस्परगतं च समं च कूटम्।।१४।।

### व्याख्या

इदानीं लकारसकारककारषकाररूप वर्णचतुष्ट्ये कादिस्पर्श कूटाक्षरस्य चतुर्विधजगद्बीजसंसृष्टिरूपत्वं व्युत्पादयति। ज्ञानमित्यादि। द्वयाद्वयमयं भेदा-

भेदात्मकं ज्ञानं लसकार रूपं भेदज्ञानं। पदान्तःस्थयवर्गे प्रकृति प्रतिपादको यो लकारस्तस्यैव तत्पदाधिष्ठातृत्वात्। तत्पदस्य ज्ञान पदत्वात्। ज्ञान प्रमातृत्वं मनःप्रतिपादकस्य लकारस्य तदव्याप्यत्वाभिमानदोषान्न ज्ञातृतोपत्तिः। तन्मूल-रूपस्य वकारस्य च तथा ज्ञेयस्थानीयस्य यकारस्य च ज्ञातृत्वं नाशङ्कनीयम्। ज्ञेयवर्गस्य गन्धादेः सर्वत्र पृथिव्याद्यङ्गत्वात्। प्रकृत्याकार पृथिवीरूपस्य लकारस्यान्तःपदे क्रियाप्रमातृशङ्का न समुचिता। अतो लकारस्य ज्ञातृत्वं निश्चितम्। श-वर्ग पदे अभेद ज्ञानत्वं सदाशिवात्मन सकारस्य निर्विवादम्। तादृग् द्वयाद्वयमयं कर्म। च कषकार रूपं ककार षकार रूपं भेद प्रकृयापदे स्पर्शस्यले ट-वर्गस्य क-वर्गव्याप्यत्वाभिभानदोषान्नकर्तृत्वम्। अपितु क-वर्गाधिष्ठातुः ककारस्य अभेद क्रिया पदे श-वर्गै ईश्वरात्मनष कारस्य कर्तृत्वं स्फुष्टम्। तदेतच्चतुष्कमिदं श्लिष्टं भेदज्ञानेन लकारेणाभेदज्ञानं सकारः। भेदक्रियया ककारेणभेदक्रिया षकारः। भेदाभेदयोरन्योन्यश्लिष्टता स्वभावात्। श्लेषे च पुरः स्फुरितसद्वय-कोटिप्रमायाः बलादिति भावः। श्लिष्टयोरक्षरद्विकयो सद्वयकोटिपुरस्फुरणे कीदृग् रूपमित्यत आह। लक्षरूपमिति। लकार सकारयोः श्लेष भेद रूपस्य लकारस्य पुरः स्फुरणे ल इति वर्णः स्यात्। ज्ञाने ज्ञानमेकरसी भवतीति। सकारस्य लकारे सामरस्यात् सकारयोगसंभावितोच्छूनभागो लकारी ल इति श्रूयते। ककारषकारयोः श्लेषे ककारस्य द्वैतरूपस्य पुरः स्फुरणे क्रियायां क्रिया न सामरस्यं लभत इति क्षकार स्यात्। एतत्कूट परस्परगतं क्रमात्परस्परेणव्याप्त। प्रथमं लकारेण सकारो व्याप्यते। एकत्संस्थानं भेद संसारबीजं अनन्तरं सकारेण लकारः। आ? एतत् संस्थानमभेदसंसार बीजम्। क्रियापदे च प्रथमं ककारेणषकारो व्याप्यते, अनन्तरं षकारेण ककारः। एतत्संस्थानकृत भेदाभेद बीजत्वं पूर्ववत्। समंच मध्यमपदे समव्याप्तिकत्वान्निष्यन्दम् सद्भेदाभेदोभय विमिश्रेणबीजम्। भेद संसार बीजभूतेन संस्थानेन दृश्यमानस्य कूटस्यैव संस्थानप्रकृया गुरूमुखात्पारंपर्यागत प्रतिभावद्भिरनु संधेया। शिवतत्त्वपुञ्जकस्य कूटस्यैकाक्षरत्वमेव व्यङ्गयस्य शिवतत्वस्यैक्यत्वात्। सास्नामित्वव्यङ्गयायाः जातेरिव शिव स्थूलरूपकूटाक्षरव्यङ्गयस्य शिवतत्त्वस्य न विश्रान्तिस्वरूपताभङ्ग इति वेदितव्यम्।।१४।।

## भाषा टीका

### सूत्रसार –

इस सूत्र में लकार, सकार, ककार एवं षकार को चतुर्विध जगत् का बीज प्रतिपादित किया गया है।

## व्याख्या

भेद एवं अभेद ज्ञान के प्रतिपादक वर्ण क्रमश: लकार एवं सकार हैं।

भेद-ज्ञान-स्वप्नावस्था विकल्प की जननी है अत: इस अवस्था में भेद ज्ञान का प्रादुर्भाव होता है। स्वप्न का द्योतक य – वर्ग है। य – वर्ग के अन्त: में स्थित प्रकृति का प्रतिपादक लकार स्वप्न-पद का अधिष्ठाता है। स्वप्न भेद-ज्ञान की अवस्था है इस कारण से स्वप्न-पद का अधिष्ठाता लकार ज्ञान-प्रमाता सिद्ध है।

तृतीय खण्ड में प्रकृति के द्योतक लकार को ही मन के रूप में प्रतिपादित किया गया है किन्तु लकार में व्याप्यत्व के अभिमान के दोष के कारण ज्ञातृत्व का भान नहीं होता है। अर्थात् प्रमाता मन का स्वरूप सूक्ष्म, है किन्तु मन के प्रतिपादक लकारात्मक पृथ्वी का रूप विस्तृत है; अत: यद्यपि मन-रूप पृथ्वी में प्रमातृत्व है किन्तु व्याप्यत्व के कारण उसकी उपपत्ति नहीं होती है।

तृतीय खण्ड में लकार को वकार के अन्तर्लिन प्रतिपादित किया है किन्तु इस कारण वकार अथवा ज्ञेय स्थानीय य-कार में प्रमातृत्व की शङ्का उचित नहीं है। इसी प्रकार ज्ञेय वर्ग गन्ध आदि पृथ्वी का अङ्ग है तथापि इस कारण पृथ्वी रूप लकार के अन्त: पद में क्रियात्मक प्रमाता की शङ्का सम्भव नहीं है। अर्थात् लकार द्वारा प्रतिपादित प्रकृत ज्ञान-प्रमाता है क्रिया-प्रमाता नहीं।

अभेद-ज्ञान – इसी प्रकार सदाशिव पद का द्योतक सकार अभेद-ज्ञान का स्वरूप है। ज्ञान के सदृश कर्म भी भेदात्मक तथा अभेदात्मक है। क-कार भेद-क्रिया का तथा ष-कार अभेद-क्रिया का प्रतिपादक है। भेद-क्रिया के द्योतक स्पर्श वर्णो के अन्तर्गत क-वर्ग में ट-वर्ग व्याप्त है इस दोष के कारण ट-वर्ग में कर्तृत्व स्पष्ट नहीं है अपितु क-वर्ग के अधिष्ठाता श-वर्ग द्वारा प्रतिपादित अभेद-प्रक्रिया पद ईश्वर तत्त्व में कर्तृत्व स्पष्ट है। अर्थात् कर्मेन्द्रियों के द्योतक ट-वर्ग में कर्तृत्व की स्थिति होते हुए भी जडांश के कारण कर्तृत्व स्पष्ट नहीं है यह कर्तृत्व कर्मेन्द्रियों के अधिष्ठाता ईश्वर तत्त्व में स्पष्ट होता है।

उपर्युक्त प्रकार से चतुर्विध जगत् में भेद-ज्ञानात्मक लकार से अभेद-ज्ञानात्मक सकार का संश्लेश है तथा भेद-क्रियात्मक क-कार के अभेद-क्रियात्मक ष-कार का संश्लेष है। इस प्रकार अन्योन्य संश्लेश का कारण स्वभाव ही है।

इस प्रकार क एवं स तथा ट एवं ष के संश्लेष का द्वैतात्मक स्फुरण से पूर्व के स्वरूप का निरूपण सूत्र के परार्ध में करते हैं। द्वेत रूप में स्फुरित

होने से पूर्व ल-कार का स्वरूप ळ है। सकार एवं लकार के सामरस्य के कारण सकार के योग से सम्भावित उच्छून भावात्मक लकार का ळ स्वरूप होता है।

क-कार तथा ल-कार के श्लेष में द्वेत-स्फुरण से पूर्व द्वैत रूप क-कार का क्रिया में सामरस्य नहीं होता है अतः द्वैत-स्फुरण से पूर्व क-कार का स्वरूप क्ष है। अर्थात् संहारात्मक है। यह कूट क्रमशः एक दूसरे में व्याप्त हैं। प्रथम लकार से सकार व्याप्त होता है अतः यह संस्थान भेद संसार का बीज है। पश्चात् में सकार से लकार व्याप्त होता है अतः यह सकार अभेद-संसार का बीज है।

क्रिया पद में प्रथम क-कार से ष-कार व्याप्त होता है अतः क-कार भेद पद है इसके पश्चात् ष-कार से क-कार व्याप्त होता है अतः ष-कार अभेद-संसार का बीज है समं च कूट-सम पद अर्थात् मध्यम पद में व्याप्ति समान होती है अतः सम पद निस्पन्द है। भेदाभेद दोनों का मिश्रण होने से, क्षकार अक्षर को बीज रूप कहा गया। भेद-संसार का बीज होने के कारण दृश्यमान कूट की संस्थान प्रक्रिया का, परम्परा के अनुयायी प्रतिभावान साधकों को गुरुमुख से ज्ञान प्राप्त कर अनुसन्धान करना चाहिये।

शिवतत्त्व के ऐक्य के अर्थात् अद्वैत रूप के कारण शिवतत्व-पुञ्जक कूटात्मक क्षकार को एक अक्षर के रूप में प्रतिपादित किया है।

जिस प्रकार गौ का परिभाषा में गौ को सास्ना आदि से युक्त कहने से गोत्व-जाति का अभिव्यजन होता है उसी प्रकार स्थूल-रूप कूटाक्षर से अभिव्यञ्जित शिवतत्व की विश्रान्ति-रूपता का अभिव्यञ्जन क्षकार से होता है अर्थात् स्थूल-रूप कूटाक्षर को शिव-तत्व के बीज के रूप में अभिव्यञ्जक स्वीकार करने से शिवतत्व की विश्रान्ति-स्वरूपता भङ्ग नहीं होती है।

## पञ्चदशं सूत्रम्

ज्ञानात्मजागर सुषुप्त्यवधीमकार-
कूटात्मकौ पशुशिवौ गुणकोणबिन्दोः।
शिलष्टौ वशादिचतुरस्रयुगान्वयोत्थ-
नागास्र रश्म्युदरगौ ननु सर्गबिन्दू।।१५।।

## व्याख्या

इदानीं मकारादि क्षकारान्त दशाक्षर रूपस्यप्रमातृपदस्याष्टार-त्रिकोणबिन्दुचक्रेषु सन्निवेश व्युत्पादयति ज्ञानात्मेत्यादि। ज्ञानात्म जागर सुषुप्त्यवधी ज्ञानात्मनोर्जागरस्य सुषुप्तेश्च अवधी स्थानभूतौ अवधिस्थाने तिष्ठन्तावित्यर्थः। ज्ञानजागरोऽन्तस्थप्रतिपाद्यः स्वप्नः तस्यावधौ यकार प्रान्ते स्वप्नस्य प्रवृत्तिः प्रथमपदस्य जागृदाभिमुख्येन प्रवर्तमानत्वाद्वकारमारभ्य यकारे परिसमाप्तिः, तदनन्तर पदत्वान्मकारस्य स्वप्नावधिस्थानत्वम्। ज्ञान सुषुप्तिः शकार वर्ग (र्ण) प्रतिपाद्यनिर्विभेदजाग्रत्स्वप्नरूपं पदद्वयं तस्यावधौ हकारोत्तरभागे क्षकारः। निवृत्ति रूपाया ज्ञान सुषुप्तिः सुषुप्त्यभिमुखं प्रवर्तमानत्वाच्छकारमारभ्य हकारे परिसमाप्तिः तदनन्तरपदत्वात् क्षकारस्य ज्ञानसृप्त्यावधि स्थानत्वम्। एवं ज्ञान जागर ज्ञानसुषुप्त्यवधी मकार कूटात्मकौ मकार कूटाक्षर स्वरूपौ पशुशिवौ गुण कोण बिन्द्वौः त्रिकोणबिन्दुचक्रयोः श्लिष्टौ। त्रिकोण गर्भे बिन्दुः बिन्दु गर्भे त्रिकोण इति जीवशिवयोरन्योन्यव्याप्तिस्वभावत्वाच्छलेषः। भेदस्त्रैगुण्यरूपइति। त्रिगुणत्वावच्छिन्नस्य भेदप्रमातुर्जीवस्य त्रिकोण रूपता अभेदस्त्वेकरूप इत्यभेद प्रमातुः शिवत्स निर्गुणत्वोपलक्षण निष्कोण बिन्दुस्वरूपता ननु भेद प्रमातृत्वं प्रकृते पृथिव्या एवेति युज्यते। तत्र भेद पदे जीवस्य प्रमेयत्वमिति प्राक्प्रतिपादितम्। तत्कथमत्र भेदप्रमातृत्वं जीवस्य उच्यते अभेदप्रतिसिंहासनारोहश्चाप्यत्रैबोच्यत इति चेदुच्यते। प्रमातृत्वस्य अनुसन्धातृत्व लक्षणत्वात् चित्पद एव मुख्य वृत्योपपत्तिः। चैत्यपदेनुव्याप्तिमधिकृत्य गौण वृत्योपचार इति चैत्य प्रमातृत्वं जीवस्यैव। फलसमये अभेदपदीये व्यवहारे तु चैत्यस्यैवेति विवेकः। अतस्त्रिकोण विन्द्वोः श्लिष्टौ जीवशिवौ। वशादिचतुरस्त्रयुगान्वयोत्थनागास्रश्मियुदरगौ वकारादयः शकारादयश्च ,वर्णाः वशादयः। वशादिभिश्चतुरस्त्रयुग्मम्। वादिभिर्यान्तै-श्चतुभिर्वर्णैरिक चतुरस्त्रम्। शादिभिर्हान्तैश्चतुर्भिर्वर्णैरन्यच्चतुरस्त्रम्। तयोश्चतुर-स्त्रयोरन्वयः श्लेषः तेनोत्थमुद्भुतं यन्नाग्राश्रमष्टकोणं तदेव रश्मयः रश्मिचक्रम् क्षकारात्मनः शिवस्य शादि वर्ण निष्पन्न चतुरस्त्रं रश्मिचक्रम्। मकारात्मनो जीवस्यवादिवर्णनिष्पन्नं चतुरस्त्रं रश्मिचक्रं तयोश्चक्रयोर्यथाक्रममन्तर्गौ अधिष्ठा-तृत्वेन मध्यस्थितौ सर्गबिन्दू ननु विसर्गबिन्दुस्वरूपौ ननु त्रिकोणात्मनो जीवस्य विसर्ग रूपता बिन्दुचक्रात्मनः शिवस्य बिन्दुरूपतेति विवेकः।।१५।।

# भाषा टीका

## सूत्रसार -

श्रीचक्र में प्रदर्शित अष्टार, त्रिकोण एवं बिन्दु के अन्तर्गत म-कार से क्ष-कार पर्यन्त दश अक्षरों से युक्त प्रमातृ-पद के समावेश का प्रतिपादन इस सूत्र में किया गया है।

## व्याख्या

ज्ञानात्म-जागर अर्थात् स्वप्नावस्था की सीमा म-कार है तथा ज्ञान-सुषुप्ति की सीमा क्ष-कार है। म-कार जीव का (पशु) द्योतक तथा क्ष-कार शिव का द्योतक है। श्रीचक्र के अन्तर्गत त्रिकोण एवं बिन्दु के द्वारा मकारात्मक पशु एवं क्षकारात्मक शिव का संश्लिष्ट स्वरूप दर्शाया गया है।

सुषुप्ति से जाग्रत् की ओर प्रवर्तन होने पर प्रथम स्वप्न अवस्था का आविर्भाव होता है। अतः स्वप्न के प्रतिपादक अन्तस्थ वर्णों की व-कार से प्रारम्भ होकर य-कार में परिसमाप्ति है। विलोम दशा में य-कार के पश्चात् म-कार की स्थिति है। अतः म-कार स्वप्नावस्था की सीमा है।

इसी प्रकार अभेद-स्वप्न एवम् अभेद-जाग्रत् से युक्त निवृत्ति रूप सुषुप्ति अवस्था की परिसमाप्ति ह-कार में होती है। ह-कार के पश्चात् क्ष-कार का स्थान है अतः क्ष-कार ज्ञान-सुषुप्ति की सीमा है। अर्थात् जब जाग्रत् से सुषुप्ति की ओर प्रत्यावर्तन होता है तब तन्मात्र-रूप श-कार से प्रारम्भ होकर ह-कार में ज्ञान-सुषुप्ति की परिसमाप्ति होती है अतः ह-कार के अनन्तर स्थित क्ष-कार पद में ज्ञान-सुषुप्ति की सीमा निर्धारित है।

इस प्रकार श्रीचक्र में त्रिकोण एवम् बिन्दु द्वारा चित्रित, ज्ञान-जाग्रत् की सीमा म-कार स्वरूप जीव एवं ज्ञान-सुषुप्ति की सीमा क्ष-कार स्वरूप शिव का परस्पर एक-दूसरे से श्लेष है।

तात्पर्य यह है कि त्रिकोण के अन्तर्गत बिन्दु तथा बिन्दु के अन्तर्गत त्रिकोण स्थित हैं। जीव एवं शिव की स्वभावतया अन्योन्य व्याप्ति है अतः दोनों का एक-दूसरे से श्लेष सिद्ध है।

भेद का स्वरूप त्रिगुणात्मक है, तीनों गुणों का अभिव्यञ्जन श्रीचक्र में

त्रिकोण द्वारा किया गया है अतः त्रिकोण, त्रिगुणा-वच्छिन्न भेद-प्रमाता जीव का स्वरूप है। अभेद एकरूप है अतः निर्गुण होने के कारण अभेद-प्रमाता शिव का स्वरूप निष्कोण केवल बिन्दु मात्र है। पूर्व में प्रतिपादित किया गया है कि भेद-पद में जीव प्रमेय है क्योंकि प्रकृति ही भेद-प्रमाता सिद्ध होती है, जब जीव को यहाँ भेद-प्रमाता तथा अभेद पदारोही क्योंकर प्रतिपादित किया गया है?

इस प्रश्न के उत्तर में टीकाकार का तर्क है कि प्रमाता की परिभाषा अनुसन्धान-कर्ता है। अतः मुख्य वृत्ति की उपपत्ति चिद्पद ही है। अनुवृत्ति का अधिग्रहण कर चित् की चैत्यावस्था में गुणात्मक प्रवृत्ति केवल उपचार मात्र है। शिवत्व की ओर प्रत्यावर्तन में फल सिद्धि के समय चैत्य का ही चित् के साथ अभेद होता है, ऐसा सिद्धान्त है। अतः त्रिकोण एवं बिन्दु के रूप में प्रदर्शित जीव एव शिव एक-दूसरे में श्लिष्ट हैं। यह सिद्ध है।

श्रीचक्र के अन्तर्गत दो चतुरस्रों का चित्रण है। एक चतुरस्र व, ल, र, य अन्तस्थ वर्णों से निष्पन्न है तथा दूसरे चतुरस्र का उद्भव श, ष, स, ह वर्णों से है। इन दोनों चतुरस्रों के श्लेष से अष्टकोण का प्रादुर्भाव दर्शाया गया है जिसके अन्तर्गत अधिष्ठाता होने के कारण विसर्ग एवं विन्दु की स्थिति है। शादि वर्णों से निष्पन्न चतुरस्र क्षकारात्मक शिव का रश्मि चक्र है तथा वादि वर्णों से निष्पन्न चतुरस्र मकारावबोधित जीव का रश्मि-चक्र है। इन दोनों चतुरस्रों के अन्तर्गत अधिष्ठाता होने के कारण विन्दु एवं विसर्ग का चित्रण है; अतएव सिद्ध है कि शिव बिन्दु-रूप हैं तथा जीव विसर्ग-रूप है।

## टिप्पणीं -

काम-कला-विलास में अष्ट कोण को श, ष, स तथा प-वर्गमय प्रतिपादित किया गया है : "श ष स पवर्ग मयं तद्वसुकोणं" किन्तु शुद्ध मत प्रस्तुत सूत्रकार का ही प्रतीत होता है प वर्ग का चक्र के बाह्यतः स्थित चतुरस्र में सन्निवेश युक्ति युक्त है।

- श्लोक २९ दृष्टव्य – पृ. १६ – खण्ड ४ मा. च. वि.

# षोडषं सूत्रम्

ज्ञानक्रियात्मक सुषुप्ति विबोधमध्य
संस्थौक्षमावुभयपक्षगबिन्दुसगौं।
सव्यापकौ तदुभयस्यतदङ्गिभूतौ
जागृत्सुषुप्तिसमवायपदेनशक्तौ।।१६।।

## व्याख्या

इदानीं क्षकार मकारात्मनोः शिवजीवयोर्ज्ञानक्रियासुषुप्त्योर्मध्यपदे ज्ञान-क्रियाजागरयोर्मध्यपदे च यथाक्रमं सन्निवेशौचित्यंव्युत्पादयति ज्ञानक्रियेत्यादि। ज्ञानक्रियात्मक सुषुप्तिविबोधमध्य संस्थौ ज्ञानात्मिका सुषुप्तिरभेद जाग्रत्स्वप्नरूपा शवर्गप्रतिपाद्याक्रियात्मिकाभेद सुषुप्तिः स्वरेषु बिन्दुभागप्रतिपाद्या तयोः सुषुप्त्योर्मध्ये क्षकारात्मनः शिवस्य संस्थानं ज्ञानात्मको विबोधो जागरोऽन्तस्थप्रतिपाद्यो भेदस्वप्नः क्रियात्मको विबोधः स्पर्श प्रतिपाद्यो जागरः। तयोर्मध्यभागे मकारात्मनः जीवस्य सन्निवेशः। ज्ञानविभेदो भेद सुषुप्तेरप्युपलक्षणम्। अभेद जाग्रत् स्वप्नरूपायाः पूर्वकोटेरभेद सुषुप्तेरुदर-कोटिमध्ये यदा शिवस्यसन्निवेशस्तदा भेद सुषुप्ति ज्ञानविबोधात्मिका याः पूर्व कोटेः क्रिया विबोध रूपायाः उत्तर कोटिमध्ये जीवस्य सन्निवेश इति वेदितव्यम्।

एव निरूपित सन्निवेशस्थानौ क्षकारमकारात्मकौ शिवजीवौ उभयपक्षगबिन्दुविसर्गौ ज्ञानक्रिया सुषुप्तिलक्षणोभयपक्षगस्तद्व्यापकस्तदु-भयाधिष्ठाता। वैन्दवः क्षकारः भेद सुषुप्तिसहितज्ञानजागरकेवलक्रियाजागर लक्षणोभयपक्षव्यापकस्तदधिष्ठाताव्यापकोमकारः। एवं सुषुप्तिरूपोभय पक्षबैन्दवसुषुप्तिसहितजागररूपोभयपक्षव्यापकौ अतएव तदङ्गिभूतौ। निवृत्तिरूपायाः द्विविधायाः सुषुप्तेः प्रवृत्तिरूपस्य भेदसुषुप्तिसहितस्य द्विविधस्य जागरस्याधिष्ठातृत्व सूचकेन मध्यसन्निवेशन निवृत्तिरूपयोः अभेद पदयोरङ्गिभूतौ। जाग्रत्स्वप्न सुषुप्ति समवायपदे जाग्रत्सुषुप्त्योर्यः समवायो मिश्रणं तत्पदे अन्तस्थोष्म वर्गयोः खलु जाग्रत्सुषुप्त्योः समस्तयोर्नतु व्यस्तयोः समवायः अन्तस्थ पदे च जाग्रत्सुषुप्त्योः समवाय ईषत्स्पृष्टताविषयत्वात्ऊष्मपदे च जाग्रत्सुषुप्तयोः समवायः। तच्छलेषात्तस्यैषद्विवृतता विषयत्वात्। अतो व्यापकवर्गा दशाक्षर रूपस्वरस्पर्शदशयोर्व्यापिका अतएव तस्यव्यापक वर्गसंज्ञा। तत्र मध्यपदेपक्षद्वयव्यापकयो शिवजीवयोः मध्यपदोचितयोः सन्निवेशः सोपपत्तिक इति विवेकः।।१६।।

## भाषा टीका

### सूत्रसार -

इस सूत्र में सिद्ध किया है कि ज्ञान-सुषुप्ति एवं क्रियासुषुप्ति के मध्य में क्षकारात्मक शिव की स्थिति है तथा ज्ञान-जागर एवं क्रिया-जागर के मध्य मकारात्मक जीव की स्थिति है।

## व्याख्या

ज्ञानात्मक सुषुप्ति के अन्तर्गत जाग्रत् एवं स्वप्न की अभेदात्मक स्थिति होती है, जिसका अभिव्यञ्जन शवर्ग द्वारा होता है। क्रियात्मक भेद-सुषुप्ति का अभिव्यञ्जन स्वरान्तर्गत बिन्दु-भाग के द्वारा होता है। इस प्रकार निरूपित अभेद-सुषुप्ति एवं भेद-सुषुप्ति के मध्य क्षकारावबोधित शिव की स्थिति है।

ज्ञानात्मक-विबोध का अर्थ है अन्तःस्थ द्वारा अभिव्यञ्जित भेद-स्वप्न तथा क्रियात्मक-विबोध का अर्थ है स्पर्श-वर्ग के द्वारा अभिव्यञ्जित जाग्रत्। इस प्रकार निरूपित भेद-स्वप्न तथा भेद-जाग्रत् के मध्य मकारात्मक जीव की स्थिति है।

शिव-जीवात्मक क्षकार, मकार की स्थिति के सम्बन्ध में अन्य विकल्प भी है। ज्ञान-विभेद भेद-सुषुप्ति का उपलक्षण भी है, अतः भेद-सुषुप्ति एवं अभेद-सुषुप्ति के मध्य जब शिव की स्थिति निरूपित की जाती है तब ज्ञान-विबोधात्मक भेद-सुषुप्ति एवं क्रियाविबोधात्मक जाग्रत् के मध्य जीव की स्थिति का निरूपण होता है।

इस प्रकार क्षकारात्मक शिव एवं मकारात्मक जीव, जिनके सन्निवेश का उपर्युक्त स्थान निरूपित किया गया है, उभय पक्ष में व्याप्त विन्दु एवं विसर्ग हैं। अर्थात् ज्ञान-सुषुप्ति एवं क्रिया-सुषुप्ति के लक्षण के अनुसार उभय पक्षों में व्यापक वैन्दव क्षकार अधिष्ठाता है। भेद-सुषुप्ति सहित ज्ञान-जागर क्रिया जाग्रत् लक्षणों से युक्त है अतः उभय पक्षों में व्यापक विसर्गात्मक म-कार इसका अधिष्ठाता है।

इस प्रकार बिन्दु सुषुप्ति-रूप उभय पक्षों में व्यापक है अतः बिन्दु उभय पक्षों का अङ्गी है, तथा सुषुप्ति सहित जागर रूप उभय पक्षों में विसर्ग व्यापक है; अतः विसर्ग उभय-पक्षों का अङ्गी है। अधिष्ठाता के रूप में बिन्दु, विसर्ग को निवृत्ति रूप द्विविधा सुषुप्ति एवं प्रवुति रूप भेद-सुषुप्ति सहित ज्ञान-जागर

के मध्य में सन्निविष्ट प्रतिपादित किया गया है, इससे स्पष्ट है कि निवृत्ति-प्रवृत्ति रूप अभेद पद के अङ्गी भी बिन्दु एव विसर्ग ही हैं।

जाग्रत्-स्वप्न-सुषुप्ति अवस्था त्रय के समवाय (मिश्र) पद में जाग्रत्-सुषुप्ति का अन्तःस्थ एवं ऊष्म वर्गों के साथ समष्टि रूप में समवाय है न कि व्यष्टि रूप में। अन्तस्थ पद में जाग्रत्-सुषुप्ति का समवाय ईषत्-स्पृष्टा के कारण है। तथा ऊष्म पद में ईषत्-विवृत्ति का विषय होने से श्लेश के वश जाग्रत् एवं सुषुप्ति का समवाय है। इससे निष्कर्ष निकलता है कि जाग्रत् एवं सुषुप्ति के अवबोधक स्वर एवं स्पर्श वर्ग अन्तःस्थ एवं ऊष्माण वर्गों में व्यापक हैं। अतः मकार से क्षकार पर्यन्त दश वर्णों का नाम व्यापक वर्ग है। इस कारण यहाँ श्रीचक्र में स्वर एवं स्पर्श उभय पक्षों में व्यापक शिव जीव को अर्थात् क्षकार से अवबोधित शिव एवं मकार से अवबोधित जीव को मध्य पद में सन्निविष्ट करना युक्ति युक्त है।

# सप्तदशं सूत्रम्

**सङ्कोच पूर्ति परसीमपदोभयार्था**
**श्रीचक्रमध्यनिलया त्रिपुरेश्वरीसा।**
**त्रेधा विसर्गपदमेक विधं पदं च**
**बिन्दोस्तुरीयमिति बाहुचतुष्टयाढ्या।।१७।।**

## व्याख्या

**इदानीं दशारयुग्म चतुर्दशार व्यापकस्य अष्टारात्मनो मध्य चक्रस्य अधिष्ठातृत्वेन जीवशिवात्मकम-कारक्ष-कारसामरस्यमेव सर्वचक्राधिष्ठातृ भूतायाः मध्य चक्र निलयायास्त्रिपुरेश्वर्याः स्वरूपमिति व्युत्पादयति। सङ्कोचेत्यादि सङ्कोचपूर्ति परसीम पदोभयर्था। सङ्कोचस्य सङ्कोच भावस्य पूर्ते पूर्ण भावस्य यत्परसीम पदं परमावधिस्थानं जाग्रदात्मकदशारयुग्मरूपं सुषुप्त्यात्मकं चतुर्दशार रूपं च तदुभयोभयार्था। श्रीचक्र मध्य निलया प्रमेय प्रमाण प्रमातृ लक्षण पुरत्रयात्मनः श्रीचक्रस्य मध्यं स्वप्नात्मकमष्टाररूपं प्रमातृपुरं तदेव निलयः सन्निवेशस्थानं यस्याः सा त्रिपुरेश्वरी अनेन म-कार क्षकारयोरष्टारा-धिष्ठातृत्वादुभय सामरस्यमेव त्रिपुरेश्वरी स्वरूपमिति प्रतिबोधितः। अथ त्रिपुरेश्वर्याः सुषुप्ति स्वप्न जागर तुर्य लक्षण सकल चक्रार्थ स्वरूपिण्याः**

दशाचतुष्टयमेवाङ्ग चतुष्टयमिति तद् विभागमाहत्रिदेत्यादि। त्रिधा विध विसर्गपदं भेदपदं भेदस्तु सुषुप्तिभेदस्वप्नभेद, जागर रूप, बिन्दोरेक विध पदं तुर्यरूपम्। अत्र च यद्यपि अभेद जाग्रत् स्वप्न सुषुप्तिरूपेण त्रैविध्यं सम्भवति तथापि तस्य त्रैविध्यस्य भेद प्रतियोगित्वोपाधिवशात् स्फुरत्ता न तु पारमार्थेनेति तुर्यस्याभेद-पदस्यैवेक विधमेवेति। बाहुचतुष्टयाढया इत्युक्त दशाचतुष्टयोपलक्षणेन बाहुचतुष्टयेन आढ्यायाः सम्पन्नायाः त्रिपुरेश्वर्याः साम्प्रदायिको योऽयं बाहुचतुष्टय। संकेत सोऽयं दशा दशाचतुष्टयांगत्वोपलक्षण न तु पारमार्थिक इति सद्गुरुकटाक्षक्षयित सर्वसंशयस्य भाग्यवतो जीवनस्य एक वेद्यं महारहस्यमिति साम्प्रदायिक प्रवादः।।१७।।

## भाषा टीका

### सूत्रसार -

दशार-युग्म एवं चतुर्दशार से व्यापक, अष्टारात्मक मध्य चक्र के अधिष्ठाता होने के कारण म-कार एवं क्ष-कार का सामरस्य, सम्पूर्ण श्रीचक्र की अधिष्टातृ-भूत, मध्य-चक्रस्थ, त्रिपुर-सुन्दरी का स्वरूप है, जिसका प्रतिपादन इस सूत्र में किया गया है।

### व्याख्या

जाग्रदात्मक दशार-युग्म सङ्कोच भाव की चरम सीमा, एवं सुषुप्त्यात्मक चतुर्दशार पूर्ण भाव की पर-सीमा है। उभय चक्रों की अधिष्ठातृ त्रिपुरसुन्दरी हैं। श्रीचक्र के मध्य में त्रिपुरसुन्दरी का सन्निवेश स्थान है। श्रीचक्र के प्रमाण, प्रमेय, प्रमाता नामक तीन पुर हैं, जिसके मध्य में स्वप्नात्मक अष्टार रूप चक्र है जो प्रमातृ पुर के नाम से सम्बोधित होता है। यह प्रमातृ पुर त्रिपुरसुन्दरी का निलय है। इसका तात्पर्य है कि अष्टार रूप प्रमातृ पुर के अधिष्ठाता होने के कारण म-कार एवं क्ष-कार का सामरस्य ही त्रिपुर सुन्दरी का स्वरूप है।

सुषुप्ति, स्वप्न, जाग्रत् एवं तुरीय लक्षण से लक्षित सकल चक्रार्थ स्वरूपिणी त्रिपुरसुन्दरी की चार दशाऐं ही उसके चार अङ्ग हैं। विसर्ग पद के, सुषुप्ति-स्वप्न-जाग्रत् तीन भेद हैं तथा बिन्दू का तुर्य नामक केवल एक भेद है। बिन्दु के भी, अभेद जाग्रत् स्वप्न-सुषुप्ति रूप तीन भेद हो सकते हैं; तथापि इन त्रिविध भेदों का स्फुरण इस कारण होता कि तुर्य भेद का प्रतियोगी है

अतः तुर्य के यह त्रिविध भेद पारमार्थिक नहीं हैं। इस प्रकार अभेद तुर्य केवल एक प्रकार का ही है।

सम्प्रदाय के अनुसार त्रिपुरसुन्दरी को चार बाहुओं से युक्त प्रतिपादित किया गया है, किन्तु यह दशा चतुष्टय ही देवी के अङ्ग हैं अतः बाहु की कल्पना उपलक्षण मात्र है पारमार्थिक नहीं है। यह रहस्य केवल वही जान सकते हैं जिनके समस्त संशय गुरु की कृपा से नष्ट हो गये हैं।

## अष्टादशं सूत्रम्

सौषुप्त जाग्रदवहिः पद जागरेषु
तोयक्षमानिलमयेष्वकलात्मशक्त्या
आत्ते चवर्ग यमयस्वगुणेक्षुचाप
पुष्पेषुपाशनिगृहीतचितात्रिवाहुः।।१८।।

### व्याख्या

**तथैवमेव बाहुचतुष्टयसंकेतमायुद्धचतुष्टसंकेतेन सह प्रस्फुटं व्युत्पादयति। सौषुप्तेत्यादि। सौषुप्तं सुषुप्तिः जाग्रज्जागरः अबहिःपद जागरस्वप्नः सुषुप्ति जागरस्वप्नेषु तोयक्षमानिलमयेषु जलपृथिवीरूपेषु सुषुप्तिर्जडत्वाज्जलरूपा। जाग्रत्सङ्कोच रूपत्वेन कठिनत्वात्पृथिवीरूपम्। स्वप्नोवायु पर्यायमनोविलासत्वा-द्वायुरूपः। क्रमेणैतासु दशासु अ कलात्मशक्त्या अकारककारलकाररूपया शक्त्या। चैत्यात्मिकया पृथ्वीरूपेति भावः। पृथिव्या एवात्यन्त कठिनस्वरूपायाः परम चैत्यत्वात् किं बिधया शक्त्या। आत्ते चवर्ग यमयस्वगुणेक्षुचापपुष्पेषु-पाशनिगृहीतचितासुषुप्तिजाग्रत्स्वप्नेषु क्रमेणआत्तैः- पर्रिग्रहीतैः इकारचवर्ग-यकारमयैः स्वगुणैः स्वकीयधर्मैः भूतपञ्चकाधिष्ठातृभूतायाः पृथिव्याः शब्दादिपञ्चकं खलु धर्मरूपम्, नियमेन तदाश्रितत्वात्। एतैरेव शब्दादिभिः सुप्त्यादिदशात्रये प्राप्तौल्वण्यतारतम्यमयै अत एव सुषुप्ताविक्षुचापमिति सङ्केतितैः जलमयत्वेन मधुरत्वाच्च जीवस्वरूपावर्जकत्वाच्च जाग्रति प्रबुद्धभेदैः प्रस्फुट पञ्चरूपैः वशीकरणमात्र-व्यापारवत्ता कुसुमवाणा इति सङ्केतितैः स्वप्ने किञ्चिदुच्छूनदशायां वायुरूपत्वाद् वात्यावद् भ्रामणव्यापारेण भेदाभेदभ्रान्तिजननेन पाश इति सङ्केतितैः एवं इकार चवर्गयकारमयैः प्रतिपाद्याः शब्दादया एवइक्षु चाप पुष्पबाण पाशत्वेन सङ्केतिताः, तैरेवंभूतैः साधनैर्निग्रहीता बद्धा आवृता**

**चित्जीवस्वरूपिणी चितिर्यंयातया पृथिव्या शक्त्या त्रिबाहुः बाहुत्रयवती एवं चैत्यात्मिकतया शक्त्यैव सुप्त्यादि दशात्रयाधिष्ठातृ त्रिपुरेश्वर्याः बाहुत्रयां तदाश्रितं शब्दादिकपञ्चकमेव तत्तद्दशाव्यवस्थितस्वरूपविशेषं सत् इक्षुचापाद्यायुधत्रयमिति महोपदेशः।।१८।।**

## भाषा टीका

### सूत्रसार -

त्रिपुर-सुन्दरी के चार बाहुओं के संकेत एवं आयुधों के संकेत का विस्तृत विवेचन इस सूत्र का विषय है। त्रिपुरसुन्दरी के सुषुप्ति, जाग्रत्, स्वप्न नामक तीन बाहु हैं, जिनके क्रमशः इक्षु-चाप पुष्प-बाण एवं पाश तीन आयुध हैं। बाहुओं एवं आयुधों का युक्ति युक्त निरूपण यहाँ करते हैं।

## व्याख्या

जडत्व के कारण सुषुप्ति जल रूपा है। संकोच रूप होने से जाग्रत् में कठिनत्व है अतः यह पृथ्वी रूप है। वायु के पर्यायवाची मन का विलास मात्र होने से स्वप्न वायु का रूप है।

सुषुप्ति आदि तीन दशाओं में क्रम से अ क ल आत्मक शक्ति के द्वारा चिति स्वयं के गुणों से उद्भूत इक्षु-चाप, पुष्प-बाण, एवं पाश रूप आयुधों को धारण कर लेती है। अकार, ककार एवं लकार अर्थात् अकल शक्ति चैत्यात्मिका अर्थात् पृथ्वी[1] रूपा है। परम चैत्यत्व के कारण पृथ्वी का काठिन्य रूप होता है; जिसमें इकार चवर्ग एवं यकार[2] द्वारा संकेतित गुणों अर्थात् जल, पञ्च तन्मात्राओं एवं वायु का अन्तर्भाव रहता है। शब्द आदि पञ्च तन्मात्राऐं भूतपञ्चंक की अधिष्ठातृ भूत पृथ्वी के आश्रित रहते हैं। अतः यह शब्दादि पञ्चक पृथ्वी के धर्म हैं। सुप्ति आदि दशा त्रय में शब्द आदि धर्मों के औलवण्य अर्थात् तारतम्य से इक्षु-चाप आदि का संकेत निरूपित किया गया है जिसको स्पष्ट करते हैं।

सुषुप्ति को जल रूप प्रतिपादित किया गया है, जल का गुण माधुर्य है अतः सुषुप्ति में माधुर्य गुण के कारण इक्षु-चाप का संकेत किया गया है।

---

**टिप्पणी** – (१) अकार ककार एवं लकार पृथ्वी के बोधक हैं।
(२) इ-कार का संकोच-स्वरूप च वर्ग एवं य-कार है। (खण्ड ४ सूत्र २)

जाग्रत अवस्था जीव की आवर्जक है, इस दशा में प्रपञ्च का स्वरूप स्पष्ट हो जाता है, जिस से जीव मोहित होता है। अतएव जाग्रत् दशा को, वशीकरणमात्र व्यापार के कारण, कुसुम-वाण से संकेत किया है।

स्वप्न दशा उच्छूनावस्था है अर्थात् इस दशा में विकल्प की सृष्टि होती है अतएव यह वायु रूप है, अतः इस दशा में वायु के समान भ्रामण व्यापार होता है जिससे भेदाभेद भ्रान्ति की उत्पत्ति होती है जो जीव के बन्धन का कारण है। पाश बन्धन का द्योतक है अतः स्वप्न दशा का पाश से संकेत किया है।

इस प्रकार इकार चवर्ग, यकार द्वारा प्रतिपाद्य शब्दादि का ही इक्षु-चाप, पुष्प-वाण, पाश नाम से संकेत किया है। एवं भूत साधनों से आवृत चित् अर्थात् जीव स्वरूपिणी चिति को पृथ्वी रूपा शक्ति के द्वारा बाहु त्रय से युक्त निरूपित किया गया है। तथा इसी प्रकार चैत्यात्मिका शक्ति से, सुप्ति आदि दशात्रय की अधिष्ठातृ, त्रिपुरेश्वरी को बाहु त्रय से युक्त निरूपित किया है।

चैत्यात्मिका शक्ति के आश्रित शब्द आदि पञ्चक ही तत् तत् दशाओं में व्यवस्थित स्वरूप विशेष निरूपित हैं, इस कारण इक्षु-चाप आदि को आयुध रूप में प्रस्तुत किया गया है।

## ऊनविंशति सूत्रम्

तुर्येऽग्निधाम्निहचिता ससृणिप्रणुन्न
चैत्यातिपश्विभजडत्वरुजैकबाहुः।
एवं चतुर्भुज विभाव्य चतुर्दशाङ्गा
क्ष्मात्माङ्गिनी जयति मध्यपदेऽति तुर्या।।१९।।

### व्याख्या

**एवं बन्धकं बाहुत्रयं तदायुध सहितं व्युत्पाद्य मोचकं चतुर्थं बाहुं तदायुधेनसह व्युत्पादयति। तुर्येत्यादि। अग्निधाम्नि अग्नि स्वरूपे चिद्व्याप्तिस्था नादिति भावः। तुर्ये चतुर्दशायां पारिशेषा तुर्यमिति। तमा (द) काश स्वरूप मिति वेदितव्यम्। हचिता। हकार प्रतिपाद्य चिता ससृणीत्यादि सकार रूपेण सृणिना अङ्कुशेन प्रणुन्नः चैत्यमेवाति पशुर्महापशुः। अतएव महापशुत्वादिभो गजः। तस्य**

**जडत्वं चिद् व्यतिरेकेण स्फुरणं तदेव रुक् रोगः ययातयेति हचिद्विशेषणमेतत्। यथा महापशुर्गजः खल्वङ्कुशेन बोध्यते चैत्यमपि तथा सकार रूपेण सदाशिव विमर्शेन बोध्यते। चिदेक रूप्ययतां प्रात्यत इति सकारस्याङ्कुश सङ्केतोपपत्तिः। अभेद विमर्शः सकारो हकारात्मिकायाः सवित् शक्तया अङ्गत्वाद्धर्म इति तदायुधत्वं तस्य एव सकाराङ्कुशभृता ह-साकार शक्तया एकबाहुः एकबाहुमती। एवं चतुर्भुजं विभाव्य चतुर्दशाङ्गा चतुर्भुजैर्विभाव्यानि चतस्रो दशाएवाङ्गानि यस्याः सा क्ष्मात्माङ्गिनी। क्षकार मकार संसृष्टि रूपा अङ्गिनी क्षकार मकाराभ्यामेव दशाचतुष्टयमधिष्ठितमिति। तदुभय संसृष्टिरङ्गित्वं त्रिपुरेश्वर्याः प्राण स्वरूपतेति सभ्यगुपपत्तिः। निर्विकल्पपदस्य तुरीयस्य माध्यमिकत्वेनाधिष्ठातृतया क्षकारो बीजभूतः। विकल्प पदस्य सुषुप्त्यादि दशा त्रयात्मनो माध्यमिकत्वेन मकारो बीजभूतः तदुभय संसृष्टिरेव सर्वमूलत्वात्तुर्यातीत स्वभाव इति समुपदिशति। मध्यपदे तुर्येति। एतस्यैव पदस्य सर्वोत्कृष्टता जयतीति शब्देनोन्मीलिता।।११।।**

## भाषा टीका

### सूत्रसार -

बन्धकारिणी तीन भुजाओं का आयुधों सहित निरूपण करने के पश्चात् मोक्ष दातृ चतुर्थ भुजा का प्रतिपादन करते हैं।

### व्याख्या

चित् व्याप्ति का स्थान होने के कारण तुर्य अग्नि स्वरूप है। अग्नि रूप तुर्य दशा में ह-कार द्वारा प्रतिपादित चित् तत्त्व स-कार रूप अङ्कुश से युक्त है। यहाँ चैत्य (जीव) की उपमा गज से की गई है। महापशु रूप चैत्य में जडत्व के कारण चित् का स्फुरण नहीं होता है इसी को महारोग कहा गया है। जिस प्रकार महापशु गज को बोध कराने के लिये अङ्कुश की आवश्यकता होती है उसी प्रकार महापशु रूप चैत्य (जीव) को बोध कराने के हेतु स-कार रूप सदाशिवात्मक विमर्श की आवश्यकता होती है। अर्थात् सदाशिव तत्त्व के द्वारा चैत्य की चित् से एकाकारता सम्पन्न होती है। अतः स-कार रूप सदाशिवात्मक विमर्श की आवश्यकता होती है। अर्थात् सदाशिव तत्त्व के द्वारा चैत्य की चित् से एकाकारता सम्पन्न होती है। अतः स-कार का अङ्कुश के रूप में संकेत है अभेद-विमर्श रूप स-कार हकारात्मिका (अर्थात् ह-कार से अवबोधित) संवित्

शक्ति का अङ्ग हैं। इस कारण स-कार शक्ति के चौथे बाहु के आयुध के रूप में कल्पित है।

चार भुजाओं में विभाजित चार दशाऐं ही जिसके अङ्ग हैं वह त्रिपुरेश्वरी क्ष्मात्माङ्गिनी भी कही जाती है। इसका अर्थ है कि त्रिपुरेश्वरी क्ष-कार एवं म-कार की संसृष्टि रूपा है अर्थात् क्ष-कार म-कार से सुप्ति आदि दशा चतुष्ट्य अधिष्ठित हैं। तात्पर्य यह कि क्ष-कार–म-कार की संसृष्टि ही त्रिपुरेश्वरी का अङ्गित्व है अर्थात् प्राण-स्वरूपता है।

निर्विकल्प तुरीय पद के मध्य में स्थित होने के कारण क्षकार अधिष्ठाता है अतः इसको बीज कहा है। सुप्ति आदि दशा त्रयात्मक विकल्प पद के मध्य स्थित होने से म-कार को बीज कहा है। अतः सब दशाओं का मूल होने से क्ष-कार म-कार की संसृष्टि ही तुर्यातीत स्वभाव है। सूत्र में प्रयुक्त जय शब्द से इसी पद की सर्वोत्कृष्टता प्रदर्शित की गई है।

## विंशति सूत्रम्

**सुप्तिप्रभृत्युदित चैत्य विजृम्भितस्य**
**जाग्रत्पदप्रभृति चिद्विनिमज्जनं यत्।**
**तुर्यं पदं च खलु तत्रसुषुप्तिभागो**
**यश्चिन्मयः शिववपुस्तदतीवतुर्यम्।।२०।।**

### व्याख्या

**ननु पञ्चभूतानिपञ्चाम्नायाः देवस्य पञ्चमुखानीति दशाभिरपिपञ्चमिर्भवितव्यम्। सुषुप्त्यादिभिः पञ्चभिर्दशाभिरङ्गैरूपलक्षितस्तत्सर्वमयादि तदन्यो भवितुमर्हति। तत्कथं तुर्यातीतस्याङ्गित्वमुक्तमित्यत्राह सुप्तिप्रमृतीति।**

**सुप्तिदशामारभ्य। उदितस्य चैत्यविजृम्भितस्य जाग्रत्पदप्रभुति जाग्रत्पदमारभ्य यच्चिद्विनिमज्जनं चिन्मयतावभासः। तत्खलु तुर्यं पदं सुषुप्तिस्वप्न जाग्रत्क्रमेणोन्मीलितस्यभेदावभासस्य जाग्रत्स्वप्न सुषुप्तिक्रमेण योऽयमभेदावभासः तत्खल्वभेदाबभासस्थानंतुर्यदसा। तस्यांदशायां यश्चिन्मयसुषुप्तिभाग जाग्रत्स्वप्नयोश्चिन्मयावभासानन्तरं सम्भावमानश्चिन्मयीभूतसुषुप्तिरूपोविश्रमः। असोखल्वतीततुर्यम् तुर्यातीतस्वभावम् शिववपु शिवस्य शिरोरूपम्वपुः।**

चिन्मयौजाग्रत्स्वप्नौ शिवस्य जघन्यंवपुः, चिन्मयी सुषुप्तिस्तस्यशिरःपद-मितिवेदितव्यमिति भावः। एतदुक्तंभवति येषां चतस्त्र एव दशा इति मतम्। चिन्मय सुषुप्तिरतीततुर्यमत्युत्तीर्णतुरीयमितिव्यपदेशाङ्गीकारेणतुर्य एवान्तर्भाव। तेषां तुर्यातीतं नाम नान्या पृथग्दशा, चिन्मयसुषुप्तेस्तुर्यातीतत्वसम्भावनाविषयस्य तुर्य एवान्तर्भावात्। अतस्तुर्यातीतस्वभावः सर्वदशासमवायरूपो न दशामात्रः। किन्तु सर्वदशाधिष्ठाता। एतन्मतानुसारेण क्षकारमकारः समवायः सर्वदशाधिष्ठातृ-भूतस्य तुर्यातीत स्वभावत्वमङ्गित्वाभिप्रायेणोक्तम् दशामात्रपरत्वेनेतिपूर्व सूत्राभिप्रायः। नन्वेवंचाङ्गिपरत्वेनाभिमतस्य तुर्यातीतस्वभावस्य सर्वदशाङ्ग-समवायएवयुक्तः सत्वेकदशानियतक्षकारमकारसंसृष्टि सन्निवेशौचित्यमिति न मन्तव्यम्। यशाशरीरेण सर्व शरीर समवायतोऽपि शरीरैक देशे हृदयकमले सन्निवेशाङ्गीकारस्तथा सर्वदशा समवायवत् एव तुर्यातीते (त) स्वभावस्य क्षकारमकारसंसृष्टिरूपमध्यचक्रसन्निवेशो युज्यतएवेति निर्वद्यम्। येषांपुनर्मते तुर्यातीतं चिन्मय सुषुप्तिपरं पञ्चमी दशैव तेषां मतेक्षकारमकारसंसृष्टिरूपं पदं सर्वदशासमवेतं महातत्वमेव त्रिपुरेश्वरीप्राणपर्याय मिति व्यत्यययोगः।।२०।।

## भाषा टीका

### सूत्रसार -

आकाश आदि पञ्चमहाभूतों को पञ्चमुखी देवता के पांच मुखों के रूप में निरूपित किया गया है, किन्तु जाग्रत् आदि दशाएं भी मुख के रूप कल्पित की जा सकतीं हैं। सुषुप्ति आदि दशाएं जिस देवता के अङ्गों के रूप में कल्पित की गई है वह देवता दशा रूप अङ्गों से भिन्न होना चाहिये, किन्तु यहाँ तुर्यातीत दशा को ही अङ्गी के रूप में मान्य किया गया है जो विरोधात्मक है। इसका स्पष्टीकरण यहाँ करते हैं।

### व्याख्या

सुषुप्ति, स्वप्न एवं जाग्रत् क्रम से उन्मीलित भेदावभास का जाग्रत्, स्वप्न, सुषुप्ति रूप विलोम क्रम से जिस दशा में अभेद आभास होता है। वह तुर्य दशा है।

तुर्य दशा के अन्तर्गत, जाग्रत्-स्वप्नात्मक चिन्मय आभास के अनन्तर, जिस विश्रम रूप सुषुप्ति का आभास होता है वह तुर्यातीत स्वभाव है, जिसको शिव का शिरस्थान कहा गया है। अर्थात् चिन्मय जाग्रत् एवं स्वप्न शिव के जघन्य भाग हैं तथा चिन्मयी सुषुप्ति शिर-पद है।

जिनके मत में केवल चार दशाओं का ही प्रतिपादन किया गया है वह भी चिन्मय विश्रान्ति-सुषुप्ति को अङ्गीकार करते हैं, किन्तु इसका अन्तर्भाव तुर्य में ही मानते हैं, पृथक् दशा के रूप में नहीं। अतः तुर्यातीत स्वभाव समस्त दशाओं का समवाय रूप होने से अधिष्ठाता है न कि दशा मात्र। इस मत के अनुसार क्ष-कार म-कार का समवाय ही सब दशाओं का अधिष्ठातृ-भूत तुर्यातीय स्वभाव है जिसको अङ्गी स्वीकार किया है न कि केवल दशा के रूप में।

टीकाकार का मत है कि तुर्यातीत दशा को समस्त दशाओं का समवाय स्वीकार करना युक्ति युक्त है, किन्तु क्ष-कार, म-कार की संसृष्टि को एक मध्यवर्ति स्थान में सन्निविष्ट स्वीकार करना उचित नहीं है। जिस प्रकार शरीर शब्द से समस्त शरीर के समवाय का आशय व्यञ्जित होता है तथापि समस्त शरीर में व्याप्त आत्मा को हृदय-कमल में सन्निविष्ट मान्य किया जाता है उसी प्रकार सर्व दशाओं के समवाय के रूप में तुर्यातीत स्वभाव को क्ष-कार–म-कार संसृष्टि रूप मध्य-चक्र में सन्निविष्ट स्वीकार करना युक्ति युक्त है न कि केवल एक देशीय।

पुनः जिनके मत में चिन्मय सुषुप्ति रूप तुर्यातीत को पाँचवीं दशा स्वीकार करते हैं उनके मत में भी क्ष-कार, म-कार की संसृष्टि रूप पद को सर्व दशाओं के समवेत रूप महातत्त्व त्रिपुरेश्वरी के प्राण के रूप में प्रतिपादित किया है।

## एकविंशति सूत्रम्

**तुर्यं द्विखण्डमभवस्यजघन्यभागो**
**मूर्धाऽतितुर्यमनयोरनुभूः क्षमध्यम्।**
**जाग्रच्छिराः स्वपनंसुप्ति जघन्यभागो-**
**मप्राणकः पशुरसौ विपरीत बोधः।।२१।।**

## व्याख्या

**अतीत तुर्यं शिववपुरिति पूर्व सूत्रे सामान्योक्तं विशेषेण व्युत्पादयति। तुर्यमित्यादि। द्विखण्डं खण्डद्वयोपलक्षितम्। अभेद जाग्रत् स्वप्नरूपमितिभावः**

तुर्यं अभवस्य शिवस्य जघन्यभागः। अतितुर्यं अभेद सुषुप्तिरूपं तुरीयं तुर्य दशा भागः। मूर्धा शिरः अभवस्येति सम्बुद्ध्यते। शिवस्य निर्विकल्पप्रधानत्वात् विकल्पात्प्राधान्याच्चेति भवः। अनयोरप्रधानप्रधानाङ्गयोःक्षमध्यं क्षकार रूपं मध्यं अनुभूः प्राणस्थानं। जघन्य शिरोरूपयोरङ्गयोर्मध्यस्थाने कण्ठे खलु प्राण स्थितिरिति भावः। उभयाधिष्ठातुरुभयमध्य स्थितिरुपपन्नेति तात्पर्यम्। शिवप्रसङ्गेनजीवस्याप्यङ्ग विवेकमाह। जाग्रच्छिरो यस्य जाग्रच्छिराः स्वप्न सुप्तिजघन्य भागः स्वपनं स्वप्नः स्वपन सुषुप्तिर्जघन्य भागो यस्व असौ विपरीतबोधः शिवाद्विपरीतज्ञानः पशु विकल्प प्राधान्यान्निर्विकल्पाप्राधान्याच्च पशोः शिवाद्वैपरीत्यम्। एवं विधः पशुः मप्राणकः उभयाङ्गमध्यवर्तीयो मकारः स एव पशोः प्राणस्थानमितिपूर्ववद्विवेकः।।२१।।

## भाषा टीका

### सूत्रसार -

इस सूत्र में शिव के शरीर का विस्तार से वर्णन किया जाता है।

### व्याख्या

अभेद-जाग्रत् एवं अभेद-स्वप्न रूप तुर्यं दशा शिव का जघन्य भाग है। अभेद सुषुप्त्यात्मक-तुर्यावस्था शिव का शिरो-भाग है। शिव-दशा में निर्विकल्प का प्राधान्य होता है तथा विकल्प का अप्राधान्य। अतएव प्रधान एवं अप्रधान अङ्गों के मध्य स्थित क्ष-कार अनुभूः अर्थात् प्राण-स्थान है। तात्पर्य यह कि जघन्य एवं शिरोभाग के मध्य-स्थान कण्ठ में प्राण की स्थिति है अतः जघन्य एवं शिरोभाग के अधिष्ठाता शिव-रूप अतितुर्य की, दोनों भागों के मध्य स्थिति युक्ति युक्त है।

शिव की सुषुप्त्यात्मक अवस्थाओं के क्रम के विपरीत जीव की अङ्गभूत अवस्थाओं का क्रम है। पशु अर्थात् जीव का शिरोभाग जाग्रत् तथा स्वप्न एवं सुषुप्ति जघन्य भाग हैं। पशु-दशा में विकल्प का प्राधान्य रहता है एवं निर्विकल्प अनुभूति की अप्रधानता होती है अतः पशु के अङ्गों की स्थिति शिव के अङ्गों की स्थिति से विपरीत है। इस प्रकार पशु का प्राण-स्थान म-कार है क्योंकि इसकी स्थिति उभय अङ्गों के मध्य में है।

# द्वाविंशति सूत्रम्

मात्मापशुः प्रकृतिरेवतयानिगीर्णो-
हात्मापि चित्प्रकृतिरेवनिवृत्तिरूपा।
इत्थं द्विधा प्रकृतिविश्रमभूः क्षकारः
शम्भुः परः परत एव भवेत् प्रकृत्याः।।२२।।

## व्याख्या

**भेद संसारप्रवर्तिन्या प्रकृत्याः यथा मकाररूपः पशुर्वद्धः अभेदसंसार वर्तिन्या प्रकृत्या तथा क्षकाररूपस्यापि शिवस्य बन्धः। सम्भाव्यते। तत्कथं नियत बन्धं मकारक्षकारसामरस्यमुपास्यत्वेनाङ्गीकृतमित्यत्राह।**

**मात्मेति। मात्मा मकारस्वरूपः पशुर्जीवः प्रकृतिरेव तत्रहेतुमाह तया निगीर्ण इति। प्रकृत्याग्रस्तत्वात्। प्रकृत्युत्तीर्णस्तदुत्तीर्ण इति भावः। हात्मापिचित् हकाररूपिणीचित् निवृत्तिरूपा प्रकृतिरेव तदनुषङ्गनैयत्यादित्यभिप्रायः। क्षकारस्तु इत्थं द्विधा प्रकृति विश्रमभूः इत्थमुक्तमर्यादयाद्विधा द्विरूपिण्याः प्रवृत्तिनिवृत्ति रूपिण्याः प्रकृतेर्विश्रमस्थानभूः विश्रमस्थान शुद्धान्तर्मुखत्वेन संसारद्वयकला-स्पृष्टत्वात् प्रकृत्यनावृतः किन्तुप्रकृतेः स्वयमावरकमित्यभिप्रायः। अतएव। क्षकारः परः शम्भुः प्रकृत्याः परत एव न तु तदन्तः पतितः। अतो नित्यमुक्तः क्षकारः अस्यैव यद्वहीरूपं हकारः यच्चात्यन्तबहीरूपंमकारः तयोरेव प्रकृतिपारतंत्र्येण प्रकृतित्वम् न तु क्षकारस्य अतस्तस्योपास्यत्व युज्यत एवेति तात्पर्यम्।।२२।।**

## भाषा टीका

### सूत्रसार -

उपर्युक्त प्रतिपादन से शङ्का उत्पन्न होती है कि जिस प्रकार मकारात्मक पशु भेद-संसार की प्रवर्तक प्रकृति द्वारा बद्ध है उसी प्रकार अभेद-संसार की प्रवर्तक प्रकृति के द्वारा क्षकार की भी बद्धता की आशङ्का हो सकती है, अतः वन्धन युक्त क्ष-कार एवं म-कार के सामरस्य-रूप देवता की उपासना युक्ति युक्त नहीं है। इस शङ्का का निवारण इस सूत्र में किया गया है।

## व्याख्या

प्रकृति द्वारा निगीर्ण (ग्रस्त) मकारात्मक पशु प्रकृति ही है तथैव हकारात्मक चित् भी निवृत्ति-रूप प्रकृति है। क्योंकि दोनों का नियत आनुषङ्गिक सम्बन्ध है।

उपर्युक्त प्रतिपादन के अनुसार प्रवृत्ति एवं निवृत्ति रूप द्विधा प्रकृति का विश्रान्ति-स्थान क्षकार भी प्रवृत्ति एवं निवृत्ति भेद से दो प्रकार का सा प्रतीत होता है। शुद्ध अन्तर्मुख होने के कारण क्षकार बाह्य एवं आभ्यन्तर दोनों संसारों की कला से स्पृष्टि है, अतः प्रकृति से अनावृत होते हुए भी स्वयं प्रकृति का आवरक है अतः क्षकार प्रकृति से परे परशम्भु है न कि प्रकृति से आवृत जीव। अतः क्षकार नित्ययुक्त है।

प्रकृति का बाह्य रूप ह-कार एवं अत्यन्त वाह्य-रूप म-कार ही प्रकृति के परतन्त्र होने के कारण प्रकृति रूप है, किन्तु क्षकार (परशम्भु) प्रकृति के परतन्त्र नहीं है। अतः उनका स्वरूप उपास्य है।

# त्रयोविंशति सूत्रम्

**यद्वाशिवः क्ष इह मप्रतियोगिभावात्**
**सौषुप्तमेव परशम्भुपदम् चिदात्मा।**
**यच्चक्रमध्य पदता तदधीशता च**
**शम्भो (स्तस्य) सदेश्य गुणगन्धितयार्च्यभावात्॥२३॥**

## व्याख्या

क्षकारस्य मकार प्रतियोगितया विकल्प गन्धोदुर्निवारः अतः शुद्ध निर्विकल्प चित्सुषुप्ति पदमेव परं तत्व तदेदोपास्यमिति ये मन्यन्ते तदाक्षेपायाह।

यद्वेति मप्रतियोगिभावात् मकारस्य जीव प्रतिपादकस्य प्रतियोगिभावात् अन्योन्य व्याप्य व्यापक भाव संसर्गात् क्षकारः शिवः नतु परमशिवः।

विकल्प गन्ध नैथत्यादितिभावः। चिदात्मा चिन्मयंसौषुप्त पदं सुषुप्ति रेव परशम्भुपदं परमशिव तत्वं। यद्वा। यद्वेति पक्षान्तरे अस्मिन् पक्षे चित्सुषुप्तावपि विकल्पस्यात्यन्तोच्छेदो दुष्प्रतिपादः साधिते विकल्पस्यान्त्यन्तो च्छेदेपर्यन्ततो जडत्व प्रसज्येत। जडस्य च नोपास्यत्वम्। अतो विकल्पपदे वा गन्धपदे वा

**तत्वमुपास्यमिति क्षकारस्य चक्रमध्यस्थित्या विभाव्येन चक्राधिष्ठातृत्वेनोपास्यत्वं स्फुटोभूतमिति समाधत्ते। यच्चक्रमध्वपतितेत्यादि। क्षकारस्य शम्भोश्चक्रमध्यता साम्प्रदायिकी चक्रस्य मध्यप्रतिष्ठा तत्प्रतिबोधिता तदधीशता चक्राधीशता च तदेतदस्य शम्भोर्गुणगन्धितया हेतुना सिद्धिरेते सिध्यति अर्च्यभावात् अर्चनीयत्वात् उपपाद्यत इति शेषः। गुण गन्धाधानेनार्च्यनीयो नतु निर्गुण इति प्रतिपत्तिरेव क्षकारस्य शम्भोश्चक्र मध्यस्थितिः साम्प्रदायिकीतिसमर्थयतीति विवेकः।।२३।।**

# भाषा टीका

## सूत्रसार -

कतिपय विद्वानों का मत है कि म-कार के प्रतियोगी होने के कारण क्ष-कार में विकल्प का लेश अनिवार्य है। अतः शुद्ध निर्विकल्प चित् सुषुप्ति-पद ही परम तत्त्व है; जिस कारण से इसको उपास्य प्रतिपादित किया गया है।

## व्याख्या

आक्षेप को स्पष्ट करते हैं कि जीव के प्रतिपादक म-कार एवं क्ष-कार में अन्योन्य व्यापक-व्यापक संसर्ग है, अतएव क्ष-कार अर्थात् शिव में विकल्प की गन्ध नित्य है न कि परमशिव में। चिदात्मा चिन्मय सौषुप्त पद ही परम शिव तत्व है। अतः परम-शिव उपास्य है।

इसके विपरीत टीकांकार का मत है कि चित् सुषुप्ति में भी विकल्प का अत्यन्त उच्छेद दुष्प्रतिपाद है। यदि विकल्प के अत्यन्त उच्छेद की सिद्धि की जावै, तब परम-तत्त्व में जडत्व का प्रसङ्ग उत्पन्न हो जाता है। जड-तत्त्व की उपासना का विधान नहीं है। अतः विकल्प-पद अथवा गन्ध-पद (अर्थात् विकल्प के संसर्ग से युक्त पद) में ही उपासना का औचित्य है। क्ष-कार की स्थिति चक्र के मध्य में विभावित है, अतएव सम्प्रदाय के अनुसार क्ष-कार ही चक्र का अधिष्ठाता है; जिसके कारण इसका उपास्यत्व और अधिक स्पष्ट हो जाता है।

क्ष-कार शम्भू का अवबोधक है, अतएव सम्प्रदाय के अनुसार शम्भू की स्थिति भी क्ष-कार के समान ही चक्र के मध्य में प्रतिष्ठित है। एवं इसी से शम्भू की चक्राधीशता का बोध होता है तथा इसी कारण गुण-गन्धता के हेतु से शम्भु का ही उपास्यत्व सिद्ध है। अर्थात् परम-तत्त्व शम्भू-गुण के आधार से ही उपासनीय है न कि निर्गुणता के कारण। इस से यह भी सिद्ध होता है कि क्षकारात्मक शम्भू की स्थिति सम्प्रदाय के अनुसार चक्र के मध्य में ही है।

# चतुर्विंशति सूत्रम्

चन्द्राग्निभुक्छसिभुगग्निरथः समस्वं
भानुः पदेपदइदंत्रितयं स्वरादौ।
खण्डत्रयात्मकमखण्डपदं च तद्वत्
तद्विश्रमः प्रतिदशं समसंख्यतैषाम्।।२४।।

## व्याख्या

अथ पुनः पुनरावर्तमानाभिर्दशाभिरेवतिथिभिः कालो व्यवस्थाप्यते। तिथयश्च शुक्ल पक्षे च पञ्चदशकृष्णपक्षे च तावत्यः सम्भूय त्रिंशत् संख्यकाः पुनःपुनरावर्तन्ते। योगिदृष्टौदशानामेवतिथिरूपतायां तिथि समान संख्यता दशानांसाम्प्रदायिकोपदेश गम्येति तदेव प्रमेयमुपदिशति।- चन्द्राग्नि भुगित्यादि। सूत्रद्वयेनदशायांदशायां तथातथा रूपः संसारः पञ्चभूतात्मनैव कलापेन सम्पद्यते तान्यपिभूतानि दशा स्वभावान्येव। तथा हि जलतत्वात्मकश्चन्द्रः सुषुप्तिरूप, वायुतत्वात्मकः सूर्यो जाग्रद्रूपः तेजस्तत्वात्मको वह्निः स्वप्न स्वरूपः पृथिवी तत्वात्मिका प्रकृतिर्गुणत्रयपर्याय तेजस्त्रयबीजभूता। तुर्यम्। आकाशतत्वात्मकः पुमान् सकलप्रपञ्चबीजरूपिण्याः प्रकृतेः विश्रान्तिस्थानं तुर्यातीतम्। यद्यपि सुप्त्यादौकलानां बाहुल्यं विद्यते। तथापि ताः कला पञ्चस्वेव तत्वेष्वन्तर्भवन्ति। इति प्रतिदशं पञ्चैवाङ्गदशाः सुषुप्तिः सुषुप्तिर्जलम्, सुषुप्तिजाग्रद् वायुः, सुषुप्तिस्वप्नो वह्निः सुषुप्तितुर्यं पृथिवी, सुषुप्तितुर्यातीतमाकाशः। इत्येवम् जाग्रदादावप्यङ्गदशापञ्चकविभागोऽवगन्तव्यः। एवं प्रवृत्तिरूपासु सुषुप्ति जाग्रत्स्वप्नेषु प्रतिदशं पञ्चाङ्गदशागणनायां प्रवृत्तिरूपः संसारः पञ्चदशाङ्गवान् भवति। तान्येवाङ्गानि शुक्लपक्ष (स्य) योः पञ्चदशतिथय इतिविवेकः। अथनिवृत्तिसंसारे प्रवृत्तिसंसाराङ्गानां सर्वेषांनिवृत्तिरूपतेति तत्र कृष्ण पक्ष (स्य) योस्तिथयः पञ्चदशभवन्ति। प्रवृत्तिसंसारे वेद्यमयस्यचन्द्रस्याभिबृद्धिरिति तत्संसार (क) स्य शुक्ल पक्षता। निवृत्ति संसारेवेद्यस्यचन्द्रस्य क्षय इति कृष्णपक्षता तस्येतिविवेकः। सूत्रयोरक्षरार्थस्तु अग्निभुगनिग्नव्यापकश्चन्द्रः शशिभुक् चन्द्रव्यापकोऽग्नि एवं चन्द्राग्नयोः स्वभावोऽग्निः नतु सर्वासुदशास्वग्निना चन्द्रकवलनं चन्द्रेणाग्नि कवलनं विविक्षितम्। तथात्वेप्रवृत्तिसुषुप्त्यादौ अग्निना चन्द्रकवलने शुक्लपक्षत्व (व्य) हानिरिति। अथ। समता। अनयोश्चन्द्राग्न्योस्सभिता भानुः। स्वरादौ स्वरवर्गादौ पदे पद इदं त्रितयं संसारकलापकत्वेन

**नियताभ्युपेयमितिशेषः। तद्वच्चन्द्रादिवत् खण्डत्रयात्भकं चन्द्राग्निभानु रूपखण्ड त्रयात्मकंचन्द्राद्याकारेण विलसन अखण्डपदं प्रकृतिपर्याय पृथिवीरूपंचन्द्रादयः खलुगुणत्रयमयाः प्रकृतिपर्याय पृथिवीपर्याय विलासरूपाः इतिवेवेकः। अखण्डपदं गुणत्रयसमष्टिरूपत्वात् प्रकृतेरखण्डपदत्वम्। एतच्च पदं पदे चन्द्रादि पदवच्च संस्थानमिति एतद्वच्छब्दार्थः। तद्विश्रमश्च तस्यप्रकृतिरू पदस्य विश्रमः विश्रान्तिस्थानंआकाशरूपं स्वात्मतत्वमित्यर्थः। एतदपि पदं प्रतिदशं नियतमिति अङ्गदशः पञ्चक नैयात्दशानामुक्तम्। एषामङ्गानां दशासु नियतानां तिथिभिः समसंख्यता वेदितव्येति शेषः।।२४।।**

## भाषा टीका

### सूत्रसार -

चन्द्र में अग्नि व्यापक है तथा अग्नि में चन्द्र व्यापक है। भानु का स्वरूप चन्द्र एवं अग्नि का समत्व है। इन तीनों पदों की स्थिति स्वर-वर्ग में है। स्वर-वर्ग चन्द्र, अग्नि, सूर्य रूप-खण्डों के समान ही खण्डत्रयात्मक है। तथा विश्रमात्मक अखण्डपद भी उसी के समान है। यह भी ज्ञातव्य है कि प्रत्येक दशा में तिथियों की संख्या भी समान है।

### व्याख्या

इस सूत्र में पुनः पुनः आवर्तमान दशाओं को तिथियों के रूप में प्रतिपादित कर काल का व्यवस्थापन किया गया है। शुक्ल पक्ष की पन्द्रह तथा कृष्ण पक्ष की पन्द्रह, एकत्र तीस तिथियों का पुनः पुनः आवर्तन होता है। योग सम्प्रदाय में दशा-रूप तिथियों के अन्तर्गत तिथि तथा दशाओं की संख्या समान है।

दो सूत्रों के द्वारा विवेचन किया गया है कि प्रत्येक दशा में तत्तत् दशा के अनुरूप संसार का सम्पादन पञ्चभूतात्मक कलाप के द्वारा होता है। अर्थात् पञ्चभूतों का स्वभाव दशाओं के स्वभाव के अनुरूप है। टीकाकार ने दशाओं तथा पञ्चभूतों के स्वभाव की एकरूपता का विस्तार से वर्णन किया है। जल-तत्त्वात्मक चन्द्र सुषुप्ति रूप है, तेज-तत्त्वात्मक अग्नि स्वप्न का स्वरूप है, वायु-तत्त्वात्मक सूर्य जाग्रत् रूप है, त्रिगुणात्मिका पृथ्वी रूप प्रकृति तुर्य स्वरूप है, तथा आकाश-तत्त्वात्मक पुरुष सकल प्रपञ्च की बीज रूपिणी प्रकृति का तुर्यातीत नामक विश्रान्ति स्थल है।

यद्यपि सुप्ति आदि दशाओं में कलाओं का बाहुल्य रहता है तथापि उन कलाओं का आविर्भाव पञ्च तत्त्वों के अन्तर्गत ही होता है। अतः प्रत्येक दशा के अन्तर्गत उनकी अङ्गभूत दशाऐं भी पाँच ही होती हैं। उदाहरणार्थं सुषुप्ति-सुषुप्ति जल तत्त्वात्मक, सुषुप्ति-जाग्रत् वायु रूप, सुषुप्ति-स्वप्न वह्नि रूप, सुषुप्ति-तुर्य पृथ्वी रूप एवं सुषुप्ति-तुर्यातीत आकाश तत्त्वात्मक हैं। इसी प्रकार जाग्रत् आदि अन्य दशाओं के अङ्गों के विभाजन का ज्ञान करना चाहिये।

इस प्रकार प्रवृत्ति रूप-सुषुप्ति-जाग्रत्-स्वप्न प्रत्येक की अङ्गभूत पांच दशाओं की गणना करने से प्रवृत्ति-रूप संसार के पन्द्रह अङ्ग बन जाते हैं। वही पन्द्रह अङ्ग शुक्लपक्ष की पन्द्रह तिथियाँ हैं। निवृत्ति-रूप संसार में प्रवृत्ति-रूप संसार के समस्त अङ्ग निवृत्ति रूप हो जाते हैं अतएव कृष्णपक्ष की पन्द्रह तिथियों का आविर्भाव होता है। प्रवृत्ति रूप संसार में वेद्य-रूप चन्द्र की अभिवृद्धि होती है; अतएव यह संसार शुक्ल पक्ष निरूपित किया गया है। निवृत्ति-रूप संसार में वेद्य-चन्द्र का क्षय होता है, अतः इसको कृष्णपक्ष निरूपित किया है।

सूत्र के अक्षरार्थ के अनुसार अग्नि में चंद्र व्यापक है तथा चन्द्र में अग्नि व्यापक है। इस कारण चन्द्र एवं अग्नि का स्वभाव अग्नि आत्मक है क्योंकि यहाँ सब दशाओं में अग्नि चन्द्र को आत्मसात् नहीं करती है और न ही चन्द अग्नि को आत्मसात् करता है, किन्तु यदि यह आत्मसात् करने की व्यवस्था समस्त दशाओं में स्वीकार कर ली जावै तब प्रवृत्ति-संसरण में सुषुप्ति आदि दशाओं में अग्नि द्वारा चन्द्र का कवलन कर लेने पर शुक्ल पक्ष की हानि हो जावेगी।

चन्द्र एवं सूर्य के समत्व को भानु के नाम से निरूपित किया है।

संसार कलाप के रूप होने के कारण चंद्र, अग्नि, भानु तीनों खण्ड स्वर, स्पर्श एवं अन्तःस्थ वर्गों में नियत हैं। तथा चन्द्र आदि के समान ही स्वर आदि वर्गों का विलास है।

अखण्ड पद प्रकृति की पर्याय भूत पृथ्वी का स्वरूप है, गुणत्रय की समष्टि रूप होने से प्रकृति का पद अखण्ड है। इस पद का भी चन्द्र आदि के समान संस्थान है अर्थात् इस प्रकृति-रूप पद का विश्रान्ति स्थान भी चन्द्र आदि की विश्रान्ति के समान आकाश है। आकाश से तात्पर्य है स्वात्म तत्त्व। यह अखण्ड-पद भी प्रत्येक दशा में उसी प्रकार नियत है जिस प्रकार प्रत्येक दशाओं के अन्तर्गत उनके पाँच अंग। दशाओं में नियत इन अंगों की तिथियों की संख्या भी समान है ऐसा जानना चाहिये।

# पंचविंशति सूत्रम्

भेदाविभेद समता तनुभिः सुषुप्तिः
स्वप्न प्रजागर पदैस्त्रिगुणी कृताभिः।
पृथ्व्यादिखान्तर्तिथिभिर्ननु शुक्लपक्षः
कृष्णस्तु जागरपदादिक तन्निवृत्या।।२५।।

## व्याख्या

भेदेत्यादि। भेदाविभेद समता तनुभिः। क्रमेण भेदाभेद तदुभय साम्यस्वरूपैः सुषुप्तिस्वप्न जागरपदैः त्रिगुणीकृताभिः पृथिव्यादि खान्त तिथिभिः पृथिव्याद्याकाशान्ताङ्गदशारूपाभिः पञ्चभिस्तिथिभिः त्रिगणनायां पञ्चदशभिः शुक्लपक्षो ननुभवतीतिशेषः। जागर पदादिक तन्निवृत्या। अथ तुर्यदशायां जाग्रदादि प्रथममन्त्यात्तु निवृत्तिरासांतिथीनां निवृत्या निवृत्तिरूपाङ्गीकारेण कृष्णः पक्षः। तु शब्दो भेदे। एवं सिद्ध-साम्प्रदायिककाल विवेक योगे छप्तदृदृष्टेः पुरुषस्य कालपञ्चकं सिध्यतीति एतत्प्रमेयोपदेशः।।२५।।

## भाषा टीका

## व्याख्या

भेद-अभेद-भेदा भेदात्मक सुषुप्ति, स्वप्न एवं जाग्रत् क्रम से तीन पदों का पृथ्वी से आकाश पर्यन्त पाँच तत्वों का गुणा करने से शुक्ल पक्ष की पन्द्रह तिथियों का आविर्भाव होता है; एवं जाग्रत्, स्वप्न, सुषुप्ति क्रम से निवृत्ति-पद में दशाओं का तत्त्व रूप तिथियों से गुणा करने पर कृष्णपक्ष का आविर्भाव होता है। जाग्रत् आदि उपक्रम से दशाओं की निवृत्ति तुर्य में होती है उसी के अनुसार तिथियों की भी निवृत्ति अङ्गीकार करने से कृष्णपक्ष का प्रवर्तन होता है। इस प्रकार सिद्ध-सम्प्रदाय के अनुसार काल विवेक के योग में छप्त दृष्टि पुरुष का स्वरूप काल-पञ्चात्मक सिद्ध होता है।

# षड् विंशति सूत्रम्

देहात्मिका प्रकृतिरेव पराविमर्शा
सैव प्रवृत्ति विनिवृत्युभयादिभूता।
वागर्थ मिश्रवपुरिन्द्विनलार्यमत्रय्ये-
कैकयुक्त्रिपुटिका नवमूर्तिरेका।।२६।।

## व्याख्या

**इदानीं महाप्रकृति रूप परात्मिकायाः विमर्श शक्तेर्दशा विशेष रूपाणामङ्गानां नवसंख्याकत्वेन तस्याः प्रतिबिम्ब रूपं श्रीचक्रमपि नवचक्रसमय रूपमिति व्युत्पादयन्नाह। देहात्मिकेत्यादि। देहात्मिका देह रूपिणी अनेन त्रिपुरेश्वर्यां शरीरत्रयमेव मुख्यं रूपमिति व्युत्पादितम्। प्रकृतिरेव परा वाग्रूपिणी स्वरस प्रहणलक्षणात्। एवं प्रकृतिरिति परावागिति। व्यवधिष्ठा विमर्शः शक्तिः शिवप्रवृत्तिनिवृत्युभयादिभूता प्रवृत्ति संसारस्य निवृत्ति संसारस्य मिश्र संसारस्य च कारणभूतः सर्वोऽपि संसारः प्रकृतिमूलः प्रकृतेरेव विलास रूपत्वादित्यर्थः। वागर्थमिश्रवपुः नतु केवलं परावग्रूपत्वाच्छब्दरूपः अपित्वर्थरूपा च मिश्ररूपा च सर्वव्यापिवस्तुनः शब्द मूलत्वाच्छब्देऽन्तर्भावात् एवं रूपता त्रिपुरेश्वरी इन्द्वनलनार्यमादि त्रय्येकैक युक्तिपुटिका। त्रिपुटिका प्रमेयप्रमातृप्रमाण-समुदायलक्षणा इन्द्वनलार्यम्णां त्रय्या एकैकयुक् एकैकं प्रत्येकं युज्यते इत्येकैकयुक्। एवं प्रत्येकं प्रवृत्तिरूपेणचन्द्रेण निवृत्ति रूपेणनिलेन उभयसाम्यरूपेणार्यम्णा सूर्येण युक्ता या त्रिपुटी प्रमेयादिपुरत्रयी तत्स्वरूपा सती तत्त्वत एक रूपाऽपि विश्रान्ति दशायामद्वितीयापि नवमूर्तिः नव संख्या स्वरूपभेदः। असमर्थः। जडत्वात्प्रमेय रूपं चतुर्दशारात्मकं सुषुप्तिपुरं विसर्ग प्राधान्याबिन्दु प्राधान्यादुभय प्राधान्याच्च त्रिधाभिद्यते। प्रमाण रूपं दशार द्वयात्मकं जाग्रत्पुरमपि तथा प्रमातृरूपं अष्टारात्मकं स्वप्नपुरमपि तथेति नव चक्र विवेकः। एवच्चक्रं तत्तद्दशा रूपेण नवधा विलासं स्यात् सा त्रिपुरेश्वर्याः बिम्बभवतीति हृद्गताभिप्रायः।।२६।।**

## भाषा टीका

### सूत्रसार -

महाप्रकृति परात्मिका विमर्श शक्ति के दशा विशेष रूप अङ्कों की संख्या

नौ है, इस कारण समय सिद्धान्त के अनुसार विमर्श शक्ति का प्रतिबिम्ब रूप श्रीचक्र नव त्रिकोणात्मक हैं।

## व्याख्या

देहात्मिका प्रकृति ही परा-विमर्श है। तथा वही प्रकृति प्रवृत्ति, निवृत्ति एवं उभय-रूपात्मक है।

प्रवृत्ति को देहात्मिका उल्लेख करने से तात्पर्य है कि त्रिपुरेश्वरी के जाग्रदादि दशात्मक रूप-त्रय प्रकृति की देह है। प्रकृति ही स्वरस-प्रवाहिणी वाग्रूपा परावाणी है।

प्रवृत्ति, निवृत्ति एवं उभयात्मक संसार प्रकृति के विलास का रूप है अतः तीनों रूपों में संसार का मूल प्रकृति ही है।

प्रकृति का स्वरूप वाक् एवं अर्थ दोनों से मिश्रित है। प्रकृति को परा वाग्रूप कहा गया है, किन्तु इसका यह तात्पर्य नहीं है कि प्रकृति केवल शब्दात्मक है, अपितु सर्वव्यापी वस्तु का मूल शब्द है। शब्द के अन्तर्गत अर्थ का अन्तर्भाव है, अतः परा प्रकृति का शब्द, अर्थ एवं उभयात्मक मिश्र स्वरूप है।

शब्दात्मिका परा-शक्ति के तीन स्वरूप प्रमेय, प्रमाण तथा प्रमाता हैं, जो तीन पुरों के नाम से कल्पित किये गये हैं अतः तीनों पुरों में स्थित देवता को त्रिपुर-सुन्दरी के नाम से सम्बोधित किया गया है। त्रिपुरात्मक त्रिपुटी में से प्रमेय आदि प्रत्येक के अन्तर्गत प्रवृत्ति-रूप चन्द्र, निवृत्ति-रूप अग्नि एवं उभयात्मक सूर्य का समावेश है। अतः त्रिपुर-सुन्दरी का विश्रान्ति दशा में एक रूप होते हुए भी विसर्ग दशा में मूर्त्यात्मक नवधा स्वरूप हो जाता है। अर्थात् श्रीचक्र में चतुर्दशार के नाम से चित्रित, जडत्व के कारण प्रमेय रूप में प्रतिपादित सुषुप्ति-पुर विसर्ग के प्राधान्य, बिन्दु के प्राधान्य एवं विसर्गविन्दु उभय के प्राधान्य के आधार पर त्रिधा विभक्त है। इसी प्रकार प्रमाण-रूप दशार-द्वयात्मक जाग्रत्पुर, एवं प्रमातृ रूप अष्टारात्मक स्वप्न-पुर का विसर्ग, बिन्दु एवं उभय के प्राधान्य के आधार पर प्रत्येक दशा त्रिधा विभाजित है। इस प्रकार प्रमाता, प्रमेय एवं प्रमाण का नवधा विभाजन है, जो श्रीचक्र में नव चक्र के नाम से अङ्कित है। विभिन्न दशाओं के रूप में चक्रात्मक यह नवधा विलास त्रिपुर-सुन्दरी का बिम्ब है।

# सप्तविंशति सूत्रम्

चैतन्यता च जडता च विमर्श चित्यो-
स्तुल्या यदिन्धनलयोरुभयंतदिच्छा।
स्यात्कर्म चावगलितं तु मिथोजडत्वात्
ज्ञानं तयोः समपदं च तथा द्विरूपम्।।२७।।

## व्याख्या

**एवं शिवस्य सगुणस्वरूपं प्रकृतिमेवोत्कृष्य उपास्यत्व सम्भावनया नवचक्रेश्वरीं व्युत्पाद्य तस्याश्चेत्यत्वे प्रसिद्धे सम्भावितमुपास्यत्व व्याहतिशङ्का-करण्डत्वम् (कारणत्व) प्रवादमपददन्नाह। चेतन्यतेत्यादि। चितिरजडेति सम्प्रत्ययः विमर्शस्यचित्साम्य प्रतिपादयन् जडत्वमपवदति। विमर्शचित्योः विमर्श प्रकाशयोः चैतन्यता च जडता च तुल्या। उभयोरपि प्रत्येकं चैतन्यत्वं जडत्वञ्चभवतीति चमत्कारः। अयं चमत्कारोऽन्योन्य व्याप्ति निबन्धनः। व्यापकमेव चैतन्यं व्याप्यमेव जडमिति द्वयोरपि व्यापकत्वे व्याप्यत्वे च सति चिदचिद्भाव चमत्कारो निर्विशेषेण कर्त्तव्येति भावः।**

**उभावेतौ प्रकाश विमर्शौं इच्छाज्ञान क्रियावन्तावपि विमर्शस्याजडत्व प्रतिपादने हेतुमाह। यद्यस्मात्कारणात् इन्द्वनलयोरुभयं द्वयं तदिच्छा तयोः प्रकाश विमर्शयोरिच्छा। प्रकाशस्य कदाचिद्व्यापकत्वे अनल इच्छा भवति कदाचिद् न्याप्यत्वेन्दुः। विमर्शस्यापि तथा विमर्शस्येन्दुरेवेच्छेति नाशङ्कनीयम्। तस्य विमर्शस्य व्यापक दशायां तदिच्छायाः इन्दोरग्निर्वैभवप्राप्तिरग्नित्वमेव। प्रकाशेच्छायाः अग्नेरपि तदव्याप्येदन्तायामिन्दुजाड्य प्राप्तेरिन्दुत्वमेव।**

**एवं प्रकाश विमर्शयोर्व्यवहारपदे स्वरूपस्यानऽलेन्दु द्वयस्यान्योन्य-मेषितव्येच्छारूपेण प्रत्यैक्यं (प्रत्येकं) जडाजडत्वमुक्तवा मिथा कर्तृकार्य रूपं जडाजडत्वमाह। स्यादित्यादि। मिथः अवगिलितं व्याप्तं कर्त्राखलु कर्म व्याप्यते। अता परस्परमवगिलितं ग्रसितं कर्म च भवति। भूतात्कर्त्ता च भवति। इत्यर्थः। तयोः समपदं अन्योन्यविषयत्वात्तुल्यरूपं ज्ञानं च तथा पूर्ववद्द्विरूपम्। अन्योन्यं ज्ञाता च भवति ज्ञानं च भवतीत्यर्थः। एवमिन्द्वन-लयोर्विमर्श प्रकाशयोरेषित-व्येच्छा भावे कार्यकर्तृत्व भावे ज्ञातृज्ञेयभावे मिथो निर्विशेते सति प्रकाश तत्वं जडमिति दुराग्रहे विवेकहीनतां आपादयतीत्यर्थः।।२७।।**

# भाषा टीका

## सूत्रसार -

तेवीसवें सूत्र में प्रतिपादन किया है कि जड उपासनीय नहीं है अतः शिव का निर्गुण रूप उपास्य नहीं कहा जा सकता है। केवल सगुण रूप उपास्य है। छब्बीसवें सूत्र में त्रिपुरसुन्दरी को नवचक्रात्मक प्रतिपादित किया है अतः यहाँ भी उपासत्व की शङ्का उत्पन्न होती है अतः इस सूत्र में शिव एवं शक्ति दोनों को उपास्य सिद्ध करने के लिये समत्व का प्रतिपादन किया जा रहा है।

## व्याख्या

विमर्श तथा चित् दोनों तत्त्वों में समान रूप में जडता एवं चैतन्यता की स्थिति है। अर्थात् प्रकाश एवं विमर्श दोनों में से प्रत्येक जड भी है तथा चैतन्य भी है। जडत्व एवं चैतन्यत्व दोनों परस्पर विरोधी तत्त्वों की एक ही स्थान पर स्थिति है यह चमत्कार है। विमर्शं एवं प्रकाश की अन्योन्य व्याप्ति इस चमत्कार का कारण है। चैतन्य व्यापक है तथा जड़ व्याप्य है। व्यापकत्व एवं व्याप्यत्व दोनों में चित्-अचित् का चमत्कार नित्य विद्यमान है। इससे यह सिद्ध हुआ कि प्रकाश एवं विमर्श दोनों इच्छा-ज्ञान एवं क्रिया से युक्त हैं।

इन्दु जड है अतः क्रियात्मक है अग्नि अजड है अतः ज्ञानात्मक है। ज्ञान एवं क्रिया के मध्य में स्थित होने से इच्छा ज्ञानक्रियात्मक है। इस प्रकार प्रकाश एवं विमर्शं दोनों की इच्छा का रूप इन्दु एवं अग्नि सिद्ध होता है। प्रकाश जब व्यापक होता है तब प्रकाश की इच्छा का रूप अग्नि है तथा जब कदाचित् प्रकाश व्याप्य दशा में होता है तब इसकी इच्छा का रूप इन्दु होता हैं। इसी प्रकार विमर्श की इच्छा का स्वरूप भी अग्नि एवं इन्दु है।

यद्यपि विमर्श की इच्छा का साधारण स्वरूप निःसंदेह इन्दु है तथापि विमर्श की व्यापक दशा में इन्द्वात्मक इच्छा को अग्नि का वैभव प्राप्त हो जाता है अतः इस दशा में प्रकाश की इच्छा अग्नि स्वरूप ही है। इसके विपरीत विमर्श की व्याप्य दशा अर्थात् इदंता में अग्नि भी इन्दु की जड़ता को प्राप्त हो जाती है अतः यहां अग्नि इन्दु रूप है। इस कारण सिद्ध है कि व्यापक एवं व्याप्य दोनों दशाओं में विमर्श की इच्छा का रूप अग्निमय होने से विमर्श अजड है।

इस प्रकार व्यवहार पद में प्रकाश एवं विमर्श की इच्छा को इन्दु एवं अनलात्मक सिद्ध करके इन दोनों तत्त्वों को जडाजडात्मक सिद्ध किया है उसी प्रकार प्रकाश एवं विमर्श दोनों ही ज्ञाता, ज्ञान तथा ज्ञेय रूप हैं। प्रकाश एवं विमर्श दोनों ही जडाजडात्मक हैं अतः दोनों के परस्पर व्याप-स्वरूप के कारण दोनों ही कर्ता हैं तथा दोनों ही कार्य हैं। अर्थात् प्रकाश एवं विमर्श दोनों में समान रूप से कर्तृत्व एवं कर्म का समावेश है। प्रकाश तथा विमर्श दोनों एक दूसरे का विषय हैं। अतः समत्व के कारण दोनों ही ज्ञान स्वरूप हैं। इस प्रकार प्रकाश एवं विमर्श एक दूसरे के ज्ञाता एवं ज्ञेय हैं तथा दोनों ज्ञान स्वरूप हैं उपर्युक्त विवेचन से सिद्ध है कि इच्छा-भाव, कर्म-कर्तृत्वभाव एवं ज्ञातृज्ञेय-भाव में प्रकाश एवं विमर्श की समानता है; इस कारण न ही प्रकाश में और न ही विमर्श में जडत्व का प्रतिपादन किया जा सकता है। अर्थात् प्रकाश एवं विमर्श दोनों ही चैतन्य रूप हैं।

**टिप्पणी -**

इसी को एक उर्दू कवि ने यों लिखा है -

**"जर्रा जर्रा है मज़हरे खुर्शीद"**

## अष्टाविंशति सूत्रम्

**पक्षद्वयेऽपि परिवृत्तिवशात्त्रयाणा-**
**मिच्छादिकत्रितयताप्रतिधामधाम्नाम्।**
**षट्स्वत्रवृत्तिसु च कारणकार्यतास्या-**
**द्विन्दुक्षयोर्मभबोः पफवर्ग (र्ण) योश्च।।२८।।**

### व्याख्या

**अथ खण्डत्रयात्मनो मातृकामहामन्त्रस्य प्रतिबन्धमुभयपक्षार्थे न सदावर्तनं भवेत्। खण्डानामन्योन्यमादिमध्यान्तत्वनिर्विशेषेऽन्योन्यकार्यकारण भावचमत्कार श्चक्राकारता च भवतीति रहस्यमेतत्व्युत्पादयति। पक्षद्वय इत्यादि। त्रयानांधाम्नां। पदानां। मन्त्रखण्डानामित्यार्थः। पक्षद्वयेऽपि दक्षिणतो वामतश्चेत्यर्थः।**

परवृत्तिवशात् आवर्त्तवशात्। प्रतिधाम प्रतिपदं इच्छादिक त्रितयता इच्छात्वं ज्ञानत्वं क्रियात्वं च भवति। यस्य कस्य चिद्वा खण्डस्याऽऽदित्वाङ्गीकारे इच्छात्वं मध्यत्वाङ्गीकारे ज्ञानत्वमन्त्यत्वाङ्गीकारे क्रियात्वमितिविवेकः। अत्र खण्डत्रयेउक्तमर्यादया षट्सु वृत्तिसु सर्वासु बिन्दुक्षयोः (बिन्दुः) स्वर वर्गस्तस्य बिन्दोः क्षकारस्य च तथामभयोः व्यापक वर्ग सन्निवेशवतो मकारस्य स्पर्शवर्गस्य तयोर्भकारवकारयोर्युगलस्य स्पर्श वर्गस्य तयोरेव पकार फकारयोर्युगलस्य स्वरवर्गस्थितस्य विसर्गस्य चान्योन्यं कार्यकारण भावो भवति। अयमर्थः। प्रतिखण्डं हृदयप्रदेशात् प्राणपदादावर्त्तोदयः सम्भाव्यः। प्रतिखण्डं च हृदयप्रदेशे बिन्दु विसर्गौ स्वरवर्गोदरे अन्तः इति बिन्दु विसर्गों स्वरवर्गोदरे चतुरस्त्र चक्रसन्निविष्टाः प्रकृत्यहङ्कार बुद्धि मनः प्रतिपादका पकार फकार बकार भकाराः तत्र विसर्गस्थानीयौ पकार फकारौ, बिन्दु स्थानीयौ बकार भकारौ व्यापक वर्गोदरे मकार क्षकारौ (विसर्ग बिन्दु स्थानीयौ) विसर्गः बिन्दुस्थाने। एवं सति (यदा) सर्वेषु बिन्दुमुपक्रम्य प्रतिलोमावर्तेन व्यापक वर्गावगाहे क्षकारपर्यन्त-मावतः। तदानीं बिन्दुः कारणम्। क्षकारः कार्यम्। क्षकारमारभ्यअनुलोमावर्त्तेन बिन्दुपर्यवसाने क्षकारः कारणं बिन्दुः कार्यम्। अथ स्वरोदयगतं विसर्गमारभ्य स्पर्शोदरगत प फ वर्ण रूपविसर्गान्तिमनुलोमेनावर्त्ते विसर्गः कारणं प फ रूप विसर्ग कार्यम्। प फ रूपविसर्गमुपक्रम्य स्वर विसर्गान्ति प्रतिलोमेनावर्त्ते प फ विसर्गः कारणम् स्वरस्थ विसर्गः कार्यम्। अथ स्पर्शोदरगतं ब भ वर्ण रूप बिन्दुमुपकभ्यानुलोमेन व्यापकवर्गोदरस्थमकाररूपबिन्दुपर्यन्तभावर्त्ते व भ रूप बिन्दुः कारणम्। मकार बिन्दुः कार्यम् मकार बिन्दुमारभ्य प्रतिलोमेन ब भ रूप बिन्दु पर्यन्तमावर्त्ते मकार बिन्दुः कारणं ब भ रूप बिन्दुः कार्यमिति तद्विवेकः।

अत्र बिन्दु क्षकारयोर्बिन्दुत्वं शुद्धविसर्ग प फ वर्ण युगलस्य विसर्गत्वं शुद्धम्, ब भ वर्ण युग्म मकारयोः साङ्कर्येण बिन्दुत्वं विसर्गत्वञ्चेति साम्प्रदायिकोपदेशः। प्रमेय प्रमाण प्रमातृखण्डेषु यस्य कस्यचिद्वा मूलत्वाभ्युपगमसिद्धान्तः। सिद्धैरनुभवारोधेनापिकृतः। अनुभवश्चैवं हि घटादिस्फुरणे चक्षुरादि प्रमाणस्फुरणं चक्षुष्मत्प्रमातृस्फुरणं चाऽविभाव्य क्रममनुभूयते तत्र कश्चित् घटस्फुरणं प्रधानतया मन्यते। कश्चिदिन्द्रियस्फुरणंप्रधानं कश्चित्प्रमातृ स्फुरणमिति तत्पुरुष प्रतिभा व्यवस्थापिते सिद्धान्तत्रये विप्रतिषेध विषये सति सिद्धसिद्धान्तः प्रकाश विमर्श चमत्कारभूतेषु घटादिस्फुरणे (षु) सिद्धान्तत्रय समष्टिरेव सन्तिष्ठतीति।।२८।।

## भाषा टीका

स्वर, स्पर्श एवं व्यापक खण्ड-त्रयात्मक मातृका महामन्त्र के प्रत्येक बन्ध का उभय पक्षों में आवर्तन होता है। अर्थात् तीनों खण्डों में से किसी भी खण्ड का आदि, मध्य एवं अन्त पद के रूप में आवर्तन हो सकता है। इस प्रकार पौर्वापर क्रम निश्चित न होने से महामन्त्र के खण्डों में अन्योन्य कार्य-कारण भाव का चमत्कार एवं चक्राकारता का आविर्भाव होता है, जिसका रहस्य इस सूत्र में उद्घाटित किया गया है।

## सूत्रसार -

(वाम एवं दक्षिण) उभय पक्षों में आवर्तन के वश प्रत्येक खण्ड इच्छा, ज्ञान, क्रियात्मक है। तथा इस प्रकार आविर्भूत छै वृत्तियों में कारण कार्य सम्बन्ध होता है। अर्थात् बिन्दु एवं क्ष-कार का, म-कार एवं भ-कार ब-कार का तथा प फ वर्णों का अन्योन्य कार्यकारण सम्बन्ध सिद्ध होता है।

## व्याख्या

**पक्षद्वये :–** मन्त्र के तीनों पदों का दक्षिण एवं वाम दोनों पक्षों में आवर्तन होता है इस कारण प्रत्येक पद में इच्छात्व, ज्ञानत्व एवं क्रियात्व का सन्निवेश है। तीनों खण्डों में से किसी भी खण्ड को यदि आदितः स्वीकार कर लिया जावै तब वह खण्ड इच्छात्मक हो जाता है। यदि उसी को मध्य खण्ड स्वीकार किया जावै तब वह ज्ञानत्व का तथा अन्त्य पद स्वीकार करने पर क्रियात्व का रूप हो जाता है। इस मर्यादा के अनुसार दक्षिण एवं वाम पक्षों से मंत्र के खण्डों का आवर्तन करने पर छै वृत्तियाँ निर्धारित होती हैं। इन छै वृत्तियों में से प्रत्येक वृत्ति एक दूसरे का कार्य एवं कारण है। अर्थात् उपर्युक्त छै वृत्तियों के द्योतक विन्दु, क्ष-कार, म-कार, भ-ब तथा प-फ वर्णों में अन्योन्य कार्य-कारण सम्बन्ध सिद्ध होता है।

(१) स्वर वर्ग में स्थित बिन्दु का क्ष-कार से कार्य कारण सम्बन्ध है।

(२) म-कार का अर्थात् व्यापक वर्ग में सन्निविष्ट म-कार का स्पर्श वर्ग में स्थित भ-ब वर्णों से तथा

(३) प-फ वर्णों का स्वर वर्ग में स्थित विसर्ग से अन्योन्य कारण सम्बन्ध सिद्ध होता है।

प्रत्येक खण्ड में प्राणात्मक हृदय प्रदेश से मन्त्र के प्रवाह का प्रारम्भ होता है तथा प्रत्येक खण्ड के हृदय प्रदेश में ही स्वर वर्ग गत बिन्दु-विसर्ग का स्थान है। अर्थात् हृदय प्रदेश में बिन्दु का विसर्गोन्मुख आवर्त प्रारम्भ होता है तथा हृदय में ही बिन्दु की ओर विसर्ग के प्रवाह का अन्त होता है। अतः स्वर वर्ग गत विन्दुविसर्ग चतुरस्र में सन्निविष्ट प्रकृति-अहंकार-बुद्धि-मन के अभिव्यञ्जक प-कार, फ-कार, ब-कार, भ-कार का स्वरूप हैं।

यहाँ तात्पर्य है कि प-कार एवं फ-कार विसर्ग स्थानीय है, ब-कार एवं भ-कार विन्दु स्थानीय हैं तथा व्यापक वर्ग में स्थित म-कार एवं क्ष-कार विसर्गं एवं बिन्दु स्थानीय हैं। ऐसी स्थिति में सब में विन्दु के उपक्रम से प्रतिलोभ प्रवर्तन में व्यापक वर्ग के अवगाहन के उपरान्त क्ष-कार पर्यन्त आवर्त की सीमा निर्धारित होती है। इस स्थिति में बिन्दु कारण है तथा क्ष-कार कार्य है। क्ष-कार से प्रारम्भ कर बिन्दु के पर्यवसान तक अनुलोम* आवर्तन में क्ष-कार कारण है तथा बिन्दु कार्य है।

स्वर वर्ग में स्थित विसर्ग से प्रारम्भ कर स्पर्शान्तरगत प-फ वर्ण रूप विसर्ग पर्यन्त अनुलोम आवर्त में विसर्ग कारण है तथा प-फ रूप विसर्ग कार्यं है। तथा प-फ रूप विसर्गं से प्रारम्भ कर स्वर-वर्ग-गत विसर्ग पर्यन्त प्रतिलोम प्रवाह में प फ रूप विसर्ग कारण है तथा स्वरस्थ विसर्ग कार्य है।

इसी प्रकार स्पर्श-वर्गस्थ ब-भ वर्ण रूप बिन्दु से प्रारम्भ कर, व्यापक-वर्गस्थ म-कार रूप विन्दु पर्यन्त अनुलोम आवर्त में ब-भ रूप विन्दु कारण है तथा मकारात्मक बिन्दु कार्य है। मकारात्मक बिन्दु से प्रारम्भ कर ब-भ रूप बिन्दु पर्यन्त प्रतिलोम प्रवर्तन में मकारात्मक बिन्दु कारण है एवं ब-भ रूप बिन्दु कार्य है। इस प्रकार षट्-वृत्तियों के अन्योन्य कार्य-कारण के विवेक का यह विवरण टीकाकार ने प्रस्तुत किया है।

सम्प्रदाय का मत है कि स्वरस्थ बिन्दु एवं क्ष-कार के योग से घटित बिन्दुत्व शुद्ध है, स्वर वर्गस्थ विसर्ग एवं प-फ वर्ण युगल से घटित विसर्गत्व शुद्ध है एवं म-कार से घटित बिन्दुत्व एवं व-भ वर्ण युग्म से घटित विसर्गत्व में साङ्कर्य अर्थात् अशुद्धता है।

---

**टिप्पणी –** * बिन्दु मुख्य स्थान है जहाँ से प्रवर्तन का प्रारम्भ एवं अवसान होता है अतः बिन्दु से विसर्ग की ओर प्रवर्तन को (अर्थात् प्रधान से अप्रधान की ओर प्रवर्तन को) प्रतिलोम प्रवर्तन की संज्ञा दी गई है।

प्रमेय, प्रमाण तथा प्रमातृ खण्डों में से कोई भी खण्ड प्रवर्तन क्रम में मूल भूत स्वीकार किया जा सकता है अर्थात् यहाँ भी पूर्वापर क्रम नहीं है। यह सिद्धान्त सिद्ध जनों के अनुभव के आधार पर स्वीकार किया गया है।

प्रत्यक्ष रूप में भी अनुभव होता है कि घट के स्फुरण होने पर चक्षु आदि प्रमाण का स्फुरण एवं चक्षुष्मत् प्रमाता का स्फुरण विभावित होने पर ही पूर्वापार क्रम का अनुभव होता है। इस प्रकार घट की अनुभूति में कोई घट-स्फूरण की प्रधानता निरूपित करते हैं, कोई इन्द्रिय-स्फुरण की प्रधानता स्वीकार करते हैं एवं अन्य विचारक प्रमाता के स्फुरण की प्रधानता स्वीकार करते हैं। विचारक की प्रतिभा के आधार पर उपर्युक्त तीनों सिद्धान्तों का व्यवस्थापन किया गया है। इसके विपरीत सिद्ध-जनों का मत है कि प्रकाश एवं विमर्श के चमत्कार-भूत घटादि के स्फुरण की अनुभूति क्रम में उपर्युक्त तीनों सिद्धान्तों की समष्टि को अङ्गीकार करना युक्ति युक्त है।

## ऊनत्रिंशत् सूत्रम्

**चन्द्राग्निविश्रमणयोः स्वरयादिधाम्नोः**
**विश्वस्य बीजदशयोः प्रथमे पदे चिद्।**
**चित्ये निमज्जति परत्र चितौ तु चैत्य-**
**मेतत्समस्तमुभयोल्लसिते तु भानौ।।२९।।**

### व्याख्या

**ननु पूर्वोक्तत्रिखण्डस्वरूपस्य चतुर्दशारविन्यासवतः सुषुप्त्यात्मनः शाक्तस्य स्वरखण्डस्य प्राधान्येन यजद्भिः शाक्तैः सिद्धान्तीकृतम्। चिन्निमग्न चैत्यस्वरूप-साष्टारविन्यासवतः स्वप्नात्मनः शैवस्य व्यापकखण्डस्य प्राधान्येनयजनं शैवैः सिद्धान्तितम्। चतुरस्रगर्भितदशारविन्यासवतो जाग्रदात्मनः स्पर्श खण्डस्य पशुदशाशङ्कया प्राधान्येन यजनमविवेकिजनस्य उपेक्षाविषये वा स्यादिति तस्यैव खण्डस्य प्रधान यजनौचित्यं साम्प्रदायिकमिति सूत्रचतुष्टयेनव्युत्पादयति। चन्द्राग्नीत्यादि। चन्द्राग्निविश्रमणयोः। स्वर यादिधाम्नोः स्वरवर्ग व्यापक वर्गात्मिनोः पदयोः चन्द्रस्य विसर्गस्य विश्रमणं विश्रान्तिस्थानत्वं स्वरवर्गपदे अग्नेर्बिन्दोः विश्रमणं व्यापकवर्गपदे स्वरवर्गे चिन्निगरणेन चैत्यैकच्छत्रतो ता व्यापकवर्गे चैत्यनिगरणेन चिदेकश्छित्रतेति भावः। विश्वस्य बीजदशयोः।**

चैत्यविश्रमचिद्विविश्रमयोः। प्रत्येकं विश्वबीजत्वं विश्वस्य विमर्शमयत्वेन प्रकाशमयत्वेन चानुभवात्। प्रथमे पदे स्वरपदे चित् चित्ये निमज्जति। चितोदर्शनं नास्तीत्यर्थः। परत्र व्यापकवर्गपदे तु चैत्यं चिता निमज्जति चैत्यस्यदर्शनं नास्तीत्यर्थः उभयोल्लसिते। चित्च्चैत्ययोरुल्लसिते उल्लासरूपे भानौ तु स्पर्शखण्डे तु एवं (एतत) चिच्चैत्ययुगलं समस्तं अन्योन्यनिगीर्णस्वरूपम्। चिच्चैत्यरूप मुभयमपि तत्वं सम्भूय दर्शनपदे भवति। शिवशक्त्योरुभयोरपि दर्शनस्थानत्वात् भानुरूपं जाग्रच्चक्रमेव प्राधान्येन यजनीयमिति विवेकः।।२९।।

# भाषा टीका

## सूत्रसार -

पूर्व सूत्र में मातृका-महामन्त्र को स्वर, स्पर्श एव व्यापक वर्गात्मक तीन खण्डों में प्रतिपादित किया गया है। शाक्त मतावलम्बी चतुर्दशार-चक्र में विन्यस्त, सुषुप्त्यात्मक, शक्ति तत्त्व के द्योतक स्वर-वर्गात्मक प्रथम खण्ड की उपासना को प्रधान रूप से स्वीकार करते हैं। शैव सिद्धान्ती अष्टार में विन्यस्त, स्वप्नात्मक, चैत्यात्मीकृत चित् के स्वरूप, शिव-तत्त्व के अभिव्यञ्जक, व्यापक खण्ड को प्रधानतया उपासना का विषय प्रतिपादित करते हैं। चतुरस्र-गर्भित दशार में विन्यस्त जाग्रदात्मक स्पर्श-खण्ड को पशुदशा की आशङ्का से कतिपय अविवेकी साधक उपासना का विषय स्वीकार नहीं करते हैं, किन्तु जाग्रदात्मक स्पर्श-खण्ड ही प्रधान रूप से उपास्य है ऐसा इस सम्प्रदाय का मत है जिसका आगामी चार सूत्रों में विवेचन किया जा रहा हैं।

## व्याख्या

श्रीचक्र का स्वरूप चन्द्र-अग्नि तथा सूर्यात्मक है। चन्द्र का द्योतक स्वर-वर्ग है अतः विसर्गात्मक चन्द्र का विश्रान्ति स्थल स्वर वर्ग निर्धारित है तथा य आदि वर्ग अग्नि के द्योतक हैं तथा अग्नि का विश्रांति स्थल व्यापक वर्ग है। स्वर वर्ग में चित् का चैत्य के अन्तर्गत निमज्जन हो जाता है। अतः चैत्य का प्राधान्य होता है। व्यापक वर्ग में चैत्य चित् में निगीर्ण हो जाता है अतः यहाँ चित् की प्रधानता के कारण चित् का एक छत्र साम्राज्य होता है। विश्व प्रकाशमय एवं विमर्शमय हैं अतः विश्व के विश्रांति स्थल होने से चित् एवं चैत्य प्रत्येक विश्व के बीज रूप हैं।

प्रथम पद स्वर-खण्ड में चित् का चैत्य में निमज्जन हो जाता है अतः अन्तर्लीन होने के कारण चित् तत्त्व का प्रत्यक्ष दर्शन नहीं होता है। व्यापक वर्ग में चित् के अन्तर्गत चैत्य अन्तर्लीन हो जाता है, अतः चैत्य का दर्शन नहीं होता है। इस प्रकार स्वर-वर्ग एवं व्यापक वर्ग दोनों ही एकात्मक दशाएँ हैं। जब चित् एवं अचित् दोनों के उल्लास के स्वरूप भानु की प्रधानता होती है तब भानु के द्योतक स्पर्श-खण्ड में चित् एवं अचित् दोनों तत्त्वों के सम्मिलित दर्शन होते हैं। अतः शिव एवं शक्ति दोनों के साक्षात्कार की अवस्था भानु-रूप जाग्रत्-चक्र ही है जो उपासनीय है। इस प्रकार सम्प्रदाय का मत है।

# त्रिंशत् सूत्रम्

इन्दौच हव्यभुजिचोदरसीम्नियत्स्या-<br>
च्चक्रद्वयं चिदचिदभ्यवमर्दरूपम्।<br>
बिम्बद्वयीयुगलमेतदशीतिभानो-<br>
र्बिम्बस्थले हि चतुरस्रतयासमस्तम्।।३०।।

## व्याख्या

**चतुर्दशार चक्रे गर्भितचित्स्वरूपं यत् चैत्यं, अष्टार गर्भित चैत्यस्वरूपा या चित् एवमेतत् चक्राद्वयाधिष्ठातृभूत देवतायुगलं दशारद्वयाधिष्ठातृभूते चतुरस्रचक्रे सम्मिलितम्। अतेवास्य चकस्य चतरस्र भाव इतिव्युत्पादयति। इन्दौ चेत्यादि। इन्दौ। च। चतुर्दसार चक्रे। हव्यभुजि च। अष्टार चक्रे। प्रतिचक्रं। उदर सीम्नि। बिम्बस्थरश्मि चक्रमध्ये बिम्ब चक्रस्यौचित्यात्। यच्चक्रद्वयं स्यात्प्रतिचक्रं म (न्दि) न्दरे चक्रद्वयं भवतीत्यर्थः। चतुर्दशारोदरे अष्टदल-षोडशदलरूपं चिच्चैत्यरूपं चक्रद्वयम्। अष्टारोदरे त्रिकोणबिन्दुरूपं चैत्य चिदात्मकं चक्रद्वयं। कीदृशं चक्रद्वयं चिदचिदभ्यवमर्दरूपम्। चिदचितोश्चिच्चैत्ययोरभ्यवमर्दः। अन्योन्यक्रमणं तद्भूतं तदवस्थं। चतुर्दशारे षोडश दलात्मना चैत्यचक्रेणाष्टदलात्मक चिच्चक्रक्रमणम्। अतेवाष्टदलस्य षोडश दलरश्मि रूपेण तदवहिरवस्थानम्। अष्टारे विन्द्वात्मना चिच्चक्रेण त्रिकोणात्मना चैत्य चक्रक्रमणम्। अतएव त्रिकोणस्य बिन्दुरश्मि रूपेण बहिरवस्थानम्। एव व्यवस्थितमेतद् बिम्बद्वयीयुगलम्। अष्टदल षोडश दलात्मकं त्रिकोण बिन्द्वात्मकञ्च युगलं सम्भूय चतूर्रूपं। अशीत भानोः सूर्य बिम्बस्थले दशारद्वयोदरे चतुरस्रतया चतरस्र रूपेण समस्तं सम्भूय स्थितम्।**

**अष्टदल षोडशदल त्रिकोण बिन्दुरूपंचक्र चतुष्टय चतुरस्र चतुष्कोण रूपेण स्थितम्। अतस्चतुरस्त्रं प्राधान्येनयष्टव्यमिति निष्कर्षः।।३०।।**

## भाषा टीका

### सूत्रसार -

चतुर्दशार चक्र में गर्भित चिद्रूप चैत्य एवं अष्टार गर्भित चैत्य स्वरूपा चित् अर्थात् चतुर्दशार के देवता एवम् अष्टार के देवता युगल (चैत्य एवम् चित्) का दशारद्वय के अधिष्ठातृ-भूत चतुरस्र चक्र में सम्मिलित स्वरूप दर्शाया है अतएव इस चक्र को चतुरस्र नाम से सम्बोधित किया जाता है।

## व्याख्या

इस सूत्र में चतुर्दशार को इन्दु तथा अष्टार को अग्नि नाम से सम्बोन्धित किया है। चतुर्दशार एवं अष्टार दोनों चक्रों में से प्रत्येक के अन्तर में दो-दो चक्र हैं। चतुर्दशार के अन्तः में अष्टदल नामक चिद्रूप एवं षोडषदल नामक चैत्य रूप दो चक्र हैं। इसी प्रकार अष्टार में चैत्यात्मक त्रिकोण एवं चिदात्मक विन्दु नामक दो चक्र हैं; दोनों चक्रों के अन्तः स्थित चैत्य एवं चित् का अभ्यवमर्द अर्थात् अन्योन्य अतिक्रमणात्मक स्वरूप है। अर्थात् चित् का चैत्य में तथा चैत्य का चित् में अतिक्रमण स्वाभाविक रूप में होता रहता है। चतुर्दशार चक्र में षोडश दलात्मक चैत्य का अतिक्रमण अष्टदलात्मक चित् में होता है अतएव अष्टदल के बाहिर षोडष दल रूप चक्र की स्थिति है। अष्टार के अन्तर्गत प्रदर्शित बिन्द्वात्मक चित् चक्रद्वारा त्रिकोणात्मक चैत्य का अतिक्रमण होता है, अतः बिन्दु की रश्मि के रूप में त्रिकोण की स्थिति बिन्दु चक्र के बाहिर प्रदर्शित की गई है। इस प्रकार बिम्ब युगल की व्यवस्था है। यह षोडशदल एवं अष्ट दलात्मक युगल तथा बिन्दु-त्रिकोणात्मक युगल चतुष्कोण का रूप है। यह चतुष्कोण दशार द्वय के अन्तः में सूर्य के बिम्ब स्थल के रूप में प वर्ग नाम से उल्लिखित हैं जिसको समष्टितः श्रीचक्र के अन्तर्गत चतुरस्र रूप में प्रदर्शित किया गया है।

इस प्रकार षोडश दल, अष्ट दल, त्रिकोण एवं बिन्दु रूप चार चक्रों से चतुरस्र चक्र की स्थिति सिद्ध की गई है। अतः चतुरस्र प्रधान रूप से यष्टव्य है। अर्थात् चतुरस्र की पूजा समस्त चक्रों से पहिले करनी चाहिये।

# एकत्रिंशत् सूत्रम्

तस्माच्चतुष्पदमिदं चतुरस्रबिम्बं
चिच्चैत्यनिर्जरसरिद्यमुनाप्रयागः।
अर्च्यः भवेत्प्रथमतोऽथतदङ्गभूत-
चिच्चैत्यचक्रयजनं त्वितिपूर्वतस्तत्।।३१।।

## व्याख्या

**चतुरस्र चक्रस्य उक्तोपपत्या प्रथमतो यष्टव्यतां निगमयति। तस्मादित्यादि। तत्तस्मात्पूर्वसूत्र प्रतिपादतोपपत्तिरूपात् कारणात् चतुष्टयस्य समवाय स्थलम्। इदं चतुरस्र बिम्बं चिच्चैत्य निर्जर सरिद्यमुनयोः। भागीरथी यमुनयोः। चितः स्वच्छत्वात् तथा वर्ण भूत भागीरथी साम्यम्। चैत्यस्य संसार रूपतया कलङ्कितत्वान्नैल्येन यमुना साम्यम्। प्रयागो नाम यमुना भागीरथ्योः सङ्गमरूप पुण्यतमः तीर्थविशेषः। देवता चतुरस्रबिम्बमिति (मपि तथा पुण्यतमः तत्र निमज्जने सद्यो (देवता) भावश्चेति तथा निरूपितम्। इति (प्रथमतः) प्रमेयतः अर्च्यमर्च्यनीयंभवेत्। अथ चतस्र यजनानन्तरं तदङ्गभूतयो श्चिच्चैत्य चक्रयोरष्टार चतुर्दशाररूपयोर्यजनमिति। तच्चतुरस्रचक्रं पूर्वतः प्रमुखे कृतमितिशेषः। पुरत्रयात्मके श्रीचक्रे चतुरस्रमेव प्रथमतो यष्टव्यमित्येतदुपदेशात प्रमुखे देव्याः पदे (दं) सर्वंचक्रव्यापकस्थलेकृतम्। चतुरस्रस्य नैसर्गिक स्थितिषु (अष्टार) चतुरदशार यजनमिति तच्चतुरस्रचक्रं पूर्वतः चतुर्दशाष्टारमध्यदेश एव। प्रथमयष्टव्यता व्युत्पादनाय तयोश्चक्रयोर्व्यापकत्वाभिमते वाह्यस्थले सन्निवेशः काल्पनिक इति भावः। चतुरस्रचक्रं दशारद्वयास्याप्युपलक्षणम्। तस्यरश्मिचक्रमन्तरेण बिम्बचक्रावस्थानस्यानुपपन्नत्वात्।।३१।।**

## भाषा टीका

### सूत्रसार -

पूर्व सूत्र में निरूपित सिद्धांत के अनुसार बिम्बात्मक चतुरस्र चित्-चैत्य रूप गंगा एवं यमुना सरित के मध्य में स्थित प्रयाग तीर्थ के समान है। चतुरस्र भी चित्- चैत्य का अङ्ग है अतएव प्रथम यजनीय है।

## व्याख्या

पूर्व सूत्र में प्रतिपादित किया है कि यह चतुष्पद जिसको चतुरस्त्र का बिम्ब नाम से सम्बोधित किया है, अङ्गाङ्गि रूप में स्थित देवता चतुष्टय का समवाय स्थल है। गंगा-यमुना चित्-चैत्य का स्वरूप हैं, चित् के समान स्वच्छ गंगा का जल है तथा चैत्य के समान यमुना का जल है। जिस प्रकार संसार रूप अनुभूति से चैत्य कलङ्कित है उसी प्रकार यमुना का जल नीला है। अतः चैत्य से यमुना की उपमा दी गई है। गंगा एवं यमुना के संगम का स्वरूप प्रयाग नामक पुण्य तीर्थ विशेष प्रसिद्ध है, जिसमें मज्जन करने से शीघ्र ही देवता की भावना साकार हो जाती है। अतएव प्रयाग के समान ही चित्-चैत्य रूप देवता चतुष्ट्य के समवाय स्थल चतुरस्त्र का अर्चन प्रथम करणीय है।

चतुरस्त्र के यजन के अनन्तर इसके अङ्ग-भूत अष्टार एवं चतुर्दशार रूप, चित्-चैत्य चक्र का यजन करना चाहिये। अतएव पूरत्रयात्मक श्रीचक्र के अन्तर्गत चतुरस्त्र को ही, प्रथम यष्टव्य निरूपित करने के हेतु, देवी के प्रमुख-पद अर्थात् समस्त चक्रों के व्यापक स्थल पर प्रदर्शित किया गया है।

चतुरस्त्र की नैसर्गिक स्थितियों में अष्टार एवं चतुर्दशार रूप का यजन होता है; अतएव चतुरस्त्र की पूर्व स्थिति यद्यपि अष्टार एवं चतुर्दशार के मध्य-देश में निरूपित है; किन्तु प्रथम यष्टव्यता प्रतिपादित करने के हेतु चतुरस्त्र, व्यापकत्व के कारण अभिमत, अष्टार एवं चतुर्दशार के बाह्य स्थल में कल्पित है।

चतुरस्त्र चक्र दशारद्वय का भी उपलक्षण है किन्तु दशारद्वय रश्मि-चक्र है एवं चतुरस्त्र बिम्ब-चक्र है, रश्मि-चक्र के अन्तर्गत बिम्ब-चक्र का अवस्थापन अनुपन्न है; अतएव चतुरस्त्र को प्रमुख बाह्य स्थल पर प्रदर्शित किया है।

## द्वात्रिंशत् सूत्रम्

अन्तःस्थमेव चतुरस्त्रमुषर्बुधेन्द्वो-
रर्कात्मकं चिदचिदुद्भवमेतदमू।
एवञ्च सत्यपि जडाजडसारमेतत्
प्रागेव पूज्यमिति पूर्णपदे कृतं तत्।।३२।।

## व्याख्या

चतुरस्रोपलक्षितस्यजाग्रच्चक्रस्यबहिः सन्निवेशःशिष्य व्युत्पादनायैव-व्युत्पन्नापेक्षयात्वियं कल्पना (ना) नुसरणीया अपितु मध्यस्थितस्यैव चतुरस्रस्य प्राधान्य दृष्ट्या प्रथमयष्टव्यता सिध्येतिचक्रस्यान्यथा सन्निवेशकल्पनाप्रत्यवायं-परिहरति अन्तस्थमित्यादि। उषर्बुधेन्द्वोः अष्टार चतुर्दशारोपलक्षितयोरर्कात्म-कंचतुरस्रं दशारद्वयोदर नियत सन्निवेशमन्तस्थमेव। एवकारेण नैयत्यमुक्तम्। न तु बहिर्देशे तस्य सन्निवेशः शङ्कनीय इत्यर्थः। एतदङ्ग एतयोः उषर्बुधेन्द्वोरङ्गं चतुरस्रं भानु रूपं खलु भानुश्चाग्नि चन्द्रयोरङ्ग तदुभयाधीन सिद्धिकत्वात्। एवं चतुरस्रस्य अङ्गत्वे सत्यपि जडाजड सार चन्द्राग्नि तत्वयोः सारभूतमेतच्चतुरस्र-चक्ररूपमङ्गसारत्वात् प्रागेवपूज्यमिति व्युत्पादनायैव। तच्चतुरस्र चक्रं पूर्ण पदे व्याप्तिस्थलेबाह्यदेशेकृतम्। आदि सिद्धेनशिवेनेतिशेषः। मध्य चक्ररस्य चतुर-स्रोपलक्षितस्यमूलाङ्कुरापेक्षया मध्यस्थितस्यबीजस्यैव यैरुपासकैःप्राधान्यमवगतं ते मध्यस्थितमपि चतुरस्रं बीजवत्प्राधान्यदृष्ट्या प्रथमतो यजन्ते येतत्राव्युत्पन्नाः-तदपेक्षयेयं चतुरस्रंस्यबहिः सन्निवेश रूपकल्पना चक्रस्थितस्यैवार्थस्य व्याख्यान-रूपता। तदप्रत्यवायविषय इतितात्पर्यम्। अष्टदलषोडश-दलयोश्चतुर्दशारमध्य एव सन्निवेशः। तयोश्चतुरस्रस्योदरभागे यः सन्निवेशश्चतुर-स्रस्य दशारद्वयास्याप्युप लक्षकस्य समनन्तरं चतुर्दशाराष्टारयोर्जनंकर्त्तव्यमिति चतुर्दशारोपलक्षकत्वेन षोडशदलमष्टारोप लक्षकत्वेनाष्टदलञ्च शिष्यव्युत्पादनायैव वहिः सन्निवेशित-मितिवेदितव्यम्। अयमर्थः सुषुप्तिजाग्रत्स्वप्नात्मकं चक्रत्रयमपि प्रत्येकं प्राधान्येन यष्टव्यम्। तत्र सुषुप्तिचक्रस्य चतुर्दशारस्य व्याप्तिस्थले बहिर्देशे स्थित्या प्राधान्यमुपगम्यते। साम्प्रदायिकेन विलोमेन स्वप्नचक्र व्यापारस्यापिप्राधान्यमुप-गम्यते। तदुभयमध्यपतितस्य जाग्रच्चक्रस्य बीजसन्निवेशं न्यायेन यैः प्राधान्यभव-गम्यते। तदपेक्षया चतुरस्र षोडशदलाष्टदलानां जाग्रत्सुषुप्तिस्वप्न चक्रोपलक्षकानां वहिः सन्निवेशकल्पनानुसरणीया। येतु पुनरत्राव्युत्पन्ना तदपेक्षया जाग्रच्चक्रस्य प्राधान्यं वहिश्चतुस्रादि चक्रस्यरेखात्रय सन्निवेशेन व्युत्पादितम्। तदीयाकल्पना शिष्टव्युत्पादनमात्र परा सन्निवेश कल्पना विवेकेन व्युत्पत्तिमता च साधकजनेन चतुर्दशार पर्यन्त एव श्रीचक्रत्रस्यप्रत्येकं प्राधान्यमुपगन्तव्यमितिशिवम्।।३२।।

## भाषा टीका

### सूत्रसार -

चित् एवं अचित् से उद्भूत अर्करूप चतुरस्र की स्थिति अग्नि एवं

इन्दु के अन्तः में है। अतएव यद्यपि चतुरस्र इन्दु एवं अग्नि का अङ्ग सिद्ध होता है तथापि जडाजड का सार होने से, आदि सिद्ध शिव के द्वारा, प्रथम पूजनीयताा निरूपित करने के हेतु, पूर्ण पद में प्रदर्शित किया गया है।

## व्याख्या

कतिपय विद्वानों का मत है कि चतुरस्र उपलक्षित जाग्रत चक्र का श्रीचक्र के अन्तर्गत बाह्यतः सन्निवेश शिष्य के व्युत्पादन की दृष्टि से किया गया है, किन्तु व्युत्पन्न साधक की दृष्टि से यह अनुसरणीय नहीं है। अपितु अष्टार एवं चतुर्दशार चक्रों के मध्य में ही चतुरस्र की स्थिति प्रधानतया सिद्ध है, अतएव मध्य स्थित चतुरस्र की ही प्रथम पूजनीयता निरूपित करना युक्ति युक्त है। ग्रंथकार का मत है कि बाह्य प्रदर्शित चतुरस्र ही प्रथम पूजनीय है अतएव इस प्रकार बाह्यतः सन्निवेशं की कल्पना के दोषों का टीकाकार ने परिहार किया है।

अग्नि एवं इन्दु अर्थात् अष्टार एवं चतुर्दशार से उपलक्षित (देखिये सूत्र ३०) चतुरस्र की स्थिति दशारद्वय के अन्त में यद्यपि नियत है, तथापि इस कारण से चतुरस्र के बाह्यतः सन्निवेश की कल्पना के विपक्ष में शङ्का करना उचित नहीं है। इसका कारण निरूपित करते हैं।

इन्दु एवं अग्नि के अधीन होने से भानु इनका अङ्ग है, चतुरस्र भानुरूप है अतएव चतुरस्र भी इन्दु एवं अग्नि का अङ्ग सिद्ध होता है, तथापि यह चतुरस्र चक्र इन्दु एवं अग्निरूप जडाजड का सार भी है, इस कारण इसकी प्रथम पूजनीयता सिद्ध करने के हेतु ही श्रीचक्र के पूर्ण पद अर्थात् व्याप्ति स्थल में आदि सिद्ध शिव द्वारा प्रदर्शित किया गया है। (पूर्ण पद को ही बाह्य देश के नाम से व्यवहृत किया गया है।)

जो साधक चतुरस्र से उपलक्षित मध्य चक्र अर्थात् जाग्रत् चक्र का प्रथम अर्चन करते हैं वे चतुरस्र को बीज रूप मानते हैं। जिस प्रकार मूल एवं अङ्कुर की अपेक्षा बीज की प्रधानता होती है उसी प्रकार वे साधक चतुर्दशार एवं अष्टार की अपेक्षा चतुरस्रोपलक्षित मध्य चक्र की (बीज के दृष्टांत के समान) प्रधानता स्वीकार कर इसका यजन प्रथम करने के सिद्धांत का प्रतिपादन करते हैं।

अन्य साधक जो चतुरस्र के बहिः सन्निवेश की कल्पना को केवल अव्यत्पन्न शिष्य के हितार्थ स्वीकार करते हैं उनका मत उपर्युक्त सिद्धान्त का व्याख्यान मात्र है। अतः यह मत भी प्रत्यवाय से रहित है।

संक्षेप में तात्पर्य है कि अष्टदल-षोडशदल चक्रों का चतुर्दशार के मध्य में सन्निवेश है तथा इन चक्रद्वय का चतुरस्र के अन्तः में सन्निवेश है, एवं चतुरस्र दशार द्वय का उपलक्षक है अतएव चतुरस्र के समनन्तर ही चतुर्दशार एवं अष्टार का यजन करना उचित है। अर्थात् चतुर्दशार के उपलक्षक होने से षोडशदल का एवं अष्टार के उपलक्षक होने से अष्टदल का बाह्यतः चतुरस्र के रूप में सन्निवेश शिष्य के व्युत्पादन के हेतु ही किया गया है।

इसका अर्थ है कि सुषुप्ति, जाग्रत्, स्वप्न चक्र-त्रय में से प्रत्येक का प्रधान रूप में यजन करना चाहिये। सुषुप्ति-चक्रात्मक चतुर्दशार का बाह्यतः व्याप्ति स्थल में सन्निवेश है अतः इसका प्रधान्य निरूपित किया गया है। सम्प्रदाय के अनुयायी विद्वान् विलोम आर्वतन स्वीकार करते है अतः वे स्वप्न का प्राधान्य मान्य करते हैं। इनके अतिरिक्त वे साधक जो सुषुप्ति एवं स्वप्न के मध्य में आपत्ति जाग्रत् चक्र का बीज सन्निवेश-न्याय से प्राधानय स्वीकार करते हैं उनकी अपेक्षा से जाग्रत्-सुषुप्ति-स्वप्न के उपलक्षक चतुरस्र-षोडशदल-अष्टदल की वहिः सन्निवेश की कल्पना अनुसरणीय है। अर्थात् उन साधकों को पूर्ण पद में बाह्यतः सन्निविष्ट चतुरस्र का यजन प्रथम करना चाहिये न कि मध्यतः स्थित जाग्रत् चक्र का।

पुनः जो अव्युत्पन्न हैं उनकी अपेक्षा से जाग्रत् चक्र का प्राधान्य चतुरस्र चक्र के बाहिर रेखा त्रय के सन्निवेश से व्युत्पादित किया गया है। उनकी कल्पना केवल शिष्य के व्युत्पादन के हेतु है।

व्युत्पन्न साधकों की अपेक्षा से चक्रों के सन्निवेश की जो कल्पना की गई है। उसके अनुसार चतुदार पर्यन्त श्रीचक्र के अन्तगत सुषुप्ति आदि प्रत्येक की प्रधानता प्रतिपादित है।

## त्रयस्त्रिंशत् सूत्रम्

**इति परमरहस्यं मातृकार्थस्वरूपं**
**स्फुटतरमुपदिष्टं चक्रराजाभिनीतम्।**
**लगति यदयमर्थः शक्तिविद्धेऽन्तरङ्गै**
**न तु पुनरपरत्र प्रत्यवायो (ऽस्ति) न तन्मे।।३३।।**

## भाषा टीका

श्री चक्र के अभिनीत, मातृका के अर्थ के स्वरूपभूत परम रहस्य का प्रस्तुत सूत्रों में स्पष्टतर उपदेश किया गया है। सूत्रकार का निवेदन है कि शक्ति से अनुविद्ध अन्तरङ्ग में, यदि यह अर्थ लगता है तब मैं स्वयं अथवा अन्य कोई प्रत्यवार का भागी नही है।

गुरु की कृपा से शिवानन्द मुनि ने श्रीमातृकाचक्र-विवेक के पञ्चम खण्ड में इन पदों की रचना की है।

इति श्री स्वतन्त्रानन्दनाथ विरचित श्रीमातृकाचक्रविवेक की शिवानन्द कृत संस्कृत व्याख्या एवं कृष्णानन्द कृत हिन्दी व्याख्या का पञ्चम खण्ड सम्पूर्ण।

*पञ्चम खण्डः*



(१) अत्रायंश्लोको मूलश्लोकानुपूर्वीसमानप्रायः आदर्श पुस्तके टीकायामधिकमुपलभ्यते।

इति परमरहस्यं मातृकार्थस्वरूपं
स्फुटतरमुपदिष्टं चक्रराजामिनीतम्।
लगति यदयमर्थ्र शक्तिविद्धेऽन्तरङ्गेन
तु पुनरपरत्र प्रत्यवायोऽस्ति तस्मै।।१।।